# ॥ अथ सटीका कुवलयानंदकारिका प्रारभ्यते ॥

णीधरम् ॥ कुर्वे कुवलयानंदकारिकादीपिकां मुदे ॥ १ ॥ आशाधरेण कविना रामजीभट्टसूनुना ॥ क्रियते कारिकाटीका बालानामुपकारिणी[1] ॥ २ ॥ अथ तत्र भगवानप्पय्यदीक्षितनामा कविः सहृदयहृदयानंदार्थ[2]मर्थालंकाराणां लक्ष्यलक्ष-

श्रीगणेशाय नमः ॥ परस्परतपःसंपत्फलायितपरस्परौ ॥
प्रपंचमातापितरौ प्रांचौ जायापती स्तुमः ॥ १ ॥

णोपेताः कारिकाः कृत्वा तद्व्याख्यानरूपं कुवलयानंदाख्यं ग्रंथं कृतवान्। कारिकाश्च तत उद्धृत्य क्रमेण लिखितवान् । तत्र निःप्रत्यूहार्थं मंगलमाचरति ॥ परस्परेति ॥ वयं परस्परस्य तपःसंपदा अन्योऽन्यतपोलक्ष्म्या फलायितं फलवदाचरितं परस्परं याभ्यां तौ तथोक्तौ। तपोलक्ष्मीं लब्ध्वेव संबंधतया भासमानौ

१ शब्दापशब्दज्ञानरहिता बाला न तु स्तनपाः । २ काव्यवासनापरिपक्वबुद्धयः सहृदयाः ।

वस्तुतस्तु नित्यसंबंधावित्यर्थः। प्रपंचस्य विश्वस्य मातापितरौ जनकौ प्रकृतिपुरुषरूपत्वादिति भावः। प्रकर्षेण अंचतः पूजाविषयीभवतः इति प्रांचौ अर्हादीनां पूजाविषयीभवनमर्थ इति धातुवृत्तिकारः। यद्वा प्रकर्षं अंचतः गच्छतस्तौ प्रांचौ प्रकर्षयुक्तावित्यर्थः। जायापती दंपती पर्यायोक्तविधया पार्वतीपरमेश्वरावित्यर्थः। स्तुमः वर्णयामः वर्णनं हि तदुत्कर्षकथनं स्वापकर्षकथनं च वाचिकनमस्कारत्वेन परिणमतीति नमस्कारात्मकं मंगलमेतत्। अस्मदो द्वयोश्च इति कर्तृबहुवचनं तदनुसारेण क्रियायाश्चेति संक्षेपः ॥ १ ॥ अध्येतॄणां सिद्ध्यर्थं पुनर्मंगलमाचरति ॥ अमरीति ॥ अमरीणां देवीनां कबरीभारेषु वेणीगुंफेषु या भ्र-

अमरीकबरीभारभ्रमरीमुखरीकृतम् ॥
दूरीकरोतु दुरितं गौरीचरणपंकजम् ॥ २ ॥

१ मत्तस्त्वमुत्कृष्टः श्रेष्ठः। त्वत्तोऽहं निकृष्टः।

मर्यः सौरभलोभादवस्थितास्ताभिर्मुखरीकृतं शब्दायमानं कृतम्। योग्यत्वात्स्त्रीलिंगनिर्देशः। पुंसां हि दूरे स्थितिर्युक्तेति। गौरीचरणपंकजं गौर्याः पार्वत्याः चरणमेव पंकजं पादपद्मम्। चरणत्वेन परिणतं पद्ममित्यर्थः। दुरितमंतरायं[2] दूरीकरोतु हरत्वित्यर्थः। अत्रोत्तरपदार्थस्य पंकजस्य चरणत्वेन परिणत्यां दुरितदू-

अलंकारेषु बालानामवगाहनसिद्धये ॥

रीकरणोपयोगात्परिणामालंकारो नतु रूपकमुपमा वा। पंकजस्य प्राधान्यायोगात्साधारण[3]धर्मप्रयोगाच्चेति संक्षेपः। अत्र पंकजं स्वर्गंगासंबंधि बोध्यम्। तस्य जलक्रीडागतदेवीकेशस्थभ्रमरीसंबंधोपपत्तेः। अन्यस्य भ्रमरीमात्रसंबंधो घटते देवीकेशगतत्वं तु नैव ॥ २ ॥ चिकीर्षितं प्रतिजानीते ॥ अलंकारे-

१ केचित्तु परिणामालंकारस्य स्पष्टप्रतिपत्तये प्रकारान्तरेण विग्रहं कुर्वंति। चरणभूतं पंकजमिति मध्यमपदलोपी समासः। २ 'विघ्नोऽंतरायः प्रत्यूहः' इत्यमरः। ३ उपमेयं व्याघ्रादिभिः सामान्याप्रयोगे। उपमेयं पुरुषादि व्याघ्रादिभिरुपमानपदैः सह समस्यते। परं साधारणधर्मप्रयोगाभावे। यथा पुरुषव्याघ्रः।

ष्वति॥बालानां बालसदृशानामल्पबुद्धीनामलंकारेषूपमादिषु अवगाहनसिद्धये बुद्धिप्रवेशसिद्ध्यर्थं तेषामलंकाराणां ललितः सुंदरः स्पष्ट इत्यर्थः। लक्ष्यलक्षणयोरुदाहरणस्वरूपकथनयोः संग्रहः संक्षेपः। इहास्माभिरिति शेषः। क्रियते।

ललितः क्रियते तेषां लक्ष्यलक्षणसंग्रहः ॥ ३ ॥

अलंकारलक्षणमाह दंडी। काव्यशोभाकरान्धर्मानलंकारान्प्रचक्षत इति। गुणानां शोभाकरत्वेऽपि रसधर्मत्वान्नातिव्याप्तिः[२]। शब्दालंकारास्त्विह न लक्षिताः

[१] ये रसस्यांगिनो धर्माः शौर्यादय इवात्मनः। उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणा इति तल्लक्षणम्। ते च माधुर्यौजःप्रसादाख्याः। तत्र गुणस्थानमाह। गलितत्वमिवाह्लादपदव्या हृदये दधत्। माधुर्यं नाम शृंगारे प्ररोहं गाहते गुणः। आह्लादकत्वं माधुर्यं शृंगारे द्रुतिकारणम्। करुणे विप्रलंभे तच्छांते चातिशयान्वितम्। ओजोलक्षणमाह। दीप्त्यात्मविस्तृतेर्हेतुरोजोवीररसास्थितेः। बीभत्सरौद्ररसयोस्तस्याधिक्यं क्रमेण तु। यद्वशाज्ज्वलितमिव मनो जायते तदोज इत्यर्थः। प्रसादलक्षणमाह। शुष्केंधनाग्निवत्स्वच्छजलवत्सहसैव यः। व्याप्नोत्यन्यत्प्रसादोऽसौ सर्वत्र विहितास्थितिः। स चौजसि शुष्केंधनाग्निवत्स्थितः। माधुर्यं स्वच्छशर्कराजलवत्। यो गुणोऽन्यद्व्याप्यं चित्तं झटित्येव रसेन व्याप्नोति स प्रसादः। अयं सर्वेषु रसेष्वाधेयतया सर्वासु रचनासु व्यंग्यतया स्थितः। [२] अलक्ष्ये लक्षणगमनमतिव्याप्तिः।

सुगमत्वात् ॥ ३ ॥ मुख्यत्वादुपमास्वरूपमाह ॥ उपमेति ॥ यत्र श्लोकादौ द्वयोर्वर्ण्यावर्ण्ययोरर्थयोः सादृश्यलक्ष्मीः साधर्म्यशोभा शोभाविशिष्टं साधर्म्यमित्यर्थः। पूर्वपदार्थस्य[1] विशेष्यस्य प्राधान्यान्वये चमत्कारात्। यथा कुमारसंभवे। तथैव तस्थुः फणरत्नशोभा इत्यत्र। तदुक्तं तर्कशास्त्रे। सविशेषणौ हि विधिनिषेधौ

उपमा यत्र सादृश्यलक्ष्मीरुल्लसति द्वयोः ॥
हंसीव[2] कृष्ण ते कीर्तिः स्वर्गंगामवगाहते ॥ ४ ॥

सति विशेष्यबाधे विशेषणमुपसंक्रामतः। सति विशेषणबाधे विशेष्यमुपसंक्रामत इति। उल्लसति अधिकं प्रकाशते। तत्रोपमा। यथा शब्दो निदर्शनार्थं सर्वत्र। यथा हे कृष्ण ते तव कीर्तिः हंसीव वरटेव। वरटा वरला हंसीत्यभिधानात्।

१ पूर्वपदार्थं विशेष्यं मत्वा तस्यैव प्राधान्येनान्वयस्वीकारे चमत्कारात्। २ गुणदोषौ बुधो गृह्णन्निन्दुक्ष्वेडाविवेश्वरः। शिरसा श्लाघते पूर्वं परं कण्ठे नियच्छति।

स्वर्गंगां नाकनदीं अवगाहते प्रविशति । तत्र मज्जतां मुखेभ्यः प्रसरणादिति भावः। अत्र कृष्णेत्यस्याविद्यमानवत्त्वे हंसीवशब्दात्परस्य तवेतिपदस्य ते इत्यादेशः। सादृश्यलक्षणमाह रुद्रटः । अन्योन्यधर्मवत्त्वं तु स्पष्टं सादृश्यमुच्यत इति । अत्र वर्ण्यमुपमेयं न्यूनगुणमवर्ण्यमुपमानमधिकगुणम् । प्रसिद्धं च । त-

वर्ण्योपमानधर्माणामुपमावाचकस्य च ॥
एकद्वित्र्यनुपादानैर्भिन्ना लुप्तोपमाष्टधा ॥ ५ ॥

द्धर्मयोरभेदविवक्षाया इवादयो वाचका इति संप्रदायः॥४॥अस्योपमालंकारस्य चत्वारोऽवयवाः। उपमेयं उपमानं धर्मो वाचकश्चेति । तेषां निबंधने पूर्णा यथा संभवं गम्यत्वे च लुप्तेति सिद्धांतः। तत्र पूर्णा दर्शिता। इदानीं लुप्ताभेदानाह ॥ वर्ण्येति॥ वर्ण्योपमानधर्माणां उपमेयोपमानसाधारणधर्माणां उपमावाचकस्य

...ं पूर्वमविद्यमानवत् । २ तद्भिन्नत्वे सति तद्गतभूयोधर्मसजातीयभूयोधर्मवत्त्वं सादृश्यम् ।

सादृश्यद्योतकस्य इवादेर्वाचकस्य तुल्यादेर्वा चतुर्णां मध्ये। निर्धारणे षष्ठी। एकद्वित्र्यनुपादानैः। एकश्च द्वौ च त्रयश्च एकद्वित्रयः तेषां अनुपादानैर्लोपैरष्टधा भिन्ना लुप्तोपमा भवति। लुप्तावयवा उपमा लुप्तोपमेति मध्यमपदलोपोऽत्र द्रष्टव्यः। एकादीनां विषयभेदेऽपि साहित्यविवक्षायां द्वंद्वः। बहुव्रीहौ तु एकद्वित्रा इति स्या-

तडिद्गौरींदुतुल्यास्या कर्पूरंती दृशोर्मम ॥
कांत्या स्मरवधूयंती दृष्टा तन्वी रहो मया ॥ ६ ॥

दिति संक्षेपः ॥५॥ उदाहरणान्याह ॥ तडिद्गौरीति ॥ तडिदिव गौरी गौरवर्णा। अत्र समासे वाचकलोपः उपमानानि सामान्यवचनैरिति समासविधायकसूत्रमूलः। इंदुतुल्यास्या इंदुना तुल्यमास्यं मुखं यस्याः सा तथोक्ता। अल्हादकत्वेनेति शेषः। अत्र धर्मलोपोऽविवक्षामूलः। गम्यमानार्थस्याप्रयोग एव लोपो-

ऽभिमत इति कैयटोक्तेः। अदर्शनं लोप इति संज्ञाप्रवृत्तेश्च । मम दृशोर्नेत्रयोः कर्पूरमिव आचरति कर्पूरति कर्पूरति सा कर्पूरंती । प्रथमायां निषेधेऽपि क्वचिदंगीकाराल्लिङ्बंताल्लटः शत्रादेशः। अत्राप्याल्हादकत्वेनेति शेषः । तस्य धर्मस्य लोप ऐच्छिकः । वाचकस्य क्विप्प्रत्ययस्येवशब्दस्य तु शास्त्रकृतः । कांत्या लावण्येन । आत्मानमिति शेषः। स्मरवधूमिव रतिमिव आचरति मन्यते इति

यत्तया मेलनं तत्र लाभो मे यश्च तद्रतेः ॥

स्मरवधूयति स्मरवधूयति सा तथोक्ता। स्वं रतितुल्यं मन्यमानेत्यर्थः। तन्वी कृशांगी मया रहः रहसि अव्ययमेतत् ।दृष्टा।अत्र आत्मानमित्यस्य गम्यमानत्वादुपमेयलोप ऐच्छिकः इवशब्दस्य तु शास्त्रकृतः। कदाचित्काचिदिति शेषः ॥६॥

[illegible] रहसि मेमम तया तन्व्या सह यन्मेलनं समागमः च परं यः तद्रतेः ला-

भः तत्पूर्वानुभूतं। एतदधुना स्मर्यमाणं द्वयमपीति शेषः। अवितर्कितसंभवं अचिंतितोपलंभं हेतुभूतं विशेषणमेतत्काकतालीयम्। अत्र समासे स्त्रीसमागमोपमा तत्र वाचकोपमानलोपः तद्धितार्थे च तदास्वादोपमा तत्रोपमानमात्रलोपः। तथाहि। काक इव तालमिव काकतालमिति इवार्थे तत्पुरुषः तत्रेवशब्दस्योक्तार्थानामप्रयोग इति शास्त्रसिद्धो लोपः। समासाच्च तद्विषयादिति ज्ञापकात्। मयूरव्यंस-

तदेतत्काकतालीयमवितर्कितसंभवम् ॥७॥

कादयश्चेति सूत्रप्राप्तिः सह सुपेति वा। उपमानलोपस्तु कामिनीकामुकयोर्मेलनं काकतालमित्युक्तेः। पुरुषागमनस्य काकागमनमुपमानं योषागमनस्य तालफलपतनमुपमानं तयोर्मेलनस्य च काकतालमेलनमुपमानं तस्य गम्यमानत्वाल्लोपः। समासार्थानंतर्गतत्वादैच्छिकः। एवं समासार्थे वाचकोपमानलोपः तद्धितार्थे तु काकतालमिव काकतालीयमिति इवार्थे छप्रत्ययः। तत्र काकतालसमागमजन्य

आस्वादः कांतकृतकामिन्युपभोगस्योपमानम्। तस्य गम्यमानत्वादैच्छिकलोपः छप्रत्ययस्तूपमावाचकः। अवितर्कितसंभवमिति उभयत्र साधारणो धर्मः। काकतालशब्दयोर्निजकर्मणोर्लक्षणेति संक्षेपः। चतुर्थे चरणे अभवत्किं ब्रवीमि त इति पाठांतरकल्पने समासार्थे धर्मोपमानवाचकलोपः। तद्धितार्थे च धर्मोपमानलोपः अवितर्कितसंभवमिति पदलोपात्। पाठांतरकल्पनाभावे तु मदीयं पद्यमुदाहरणीयम्। यथा रामस्य पथि राक्षस्याः संगमस्तद्वधश्च यः। पुण्यैरजाकृपाणीयं मुनीनामभवद्द्वयमिति।[1] एतेऽष्टौ लुप्ता भेदाः संभवंति। तत्रैको भेदस्त्रिलोपपक्षे धर्मोपमानवाचकलुप्तेति १ द्विलोपपक्षे भेदचतुष्टयम्। धर्मवाचकलुप्ता २ वाचकोपमेयलुप्ता ३ वाचकोपमानलुप्ता ४ धर्मोपमानलुप्ता चेति ५ एकलोपपक्षे च त्रयो भेदाः। वाचकलुप्ता ६ धर्मलुप्ता ७ उपमानलुप्ता चेति ८। लुप्तोपमापि तदर्थाध्याहारेण

१ विश्वामित्रादीनाम्।

पूर्णोपमा भवति। एषैव सर्वालंकारमूलभूता । तदुक्तं चित्रमीमांसायाम् । उपमैका शैलूषी[1] संप्राप्ता चित्रभूमिकाभेदान्[2] । रंजयति काव्यरंगे[3] नृत्यंती तद्विदां चेत इति। अन्येऽपि भेदाः काव्यप्रकशकाव्यादर्शादिषु संति। इह तु विस्तरभयान्न

उपमानोपमेयत्वं यदेकस्यैव वस्तुनः ॥
इंदुरिंदुरिव[4] श्रीमानित्यादौ तदनन्वयः ॥ ८ ॥

लिखिताः ॥ ७ ॥ उपमानेति ॥ एकस्यैव वर्ण्यस्यैव वस्तुनः यदुपमानोपमेयत्वं उपमानत्वं कल्पितमुपमेयत्वं तु यथार्थमिति बोध्यम्। तदिंदुश्चंद्र इंदुरिव चंद्र इव श्रीमान्सुंदर इत्यादौ द्रष्टव्यमिति शेषः। अनन्वयः नास्त्यन्वयः प्रकारद्वयसंबंधो

---

१ नर्तकी । २ भिन्नभिन्नदेशान् । ३ रंगमंडपे । ४ गगनं गगनाकारं सागरः सागरोपमः । रामरावणायोर्युद्धं रामरावणयोरिव ।

यस्मिन्स तथोक्तः। अत्रोपमेयस्यातुल्यत्वे पर्यवसानम् ॥८॥ पर्यायेति ॥ द्वयोर्वर्ण्यावर्ण्ययोः पर्यायेण परिक्रमेण तत्तु उपमानोपमेयत्वं चेत्तर्हि उपमेयोपमा मता उपमेयाभ्यां उपमा-उपमेयोपमा इति व्युत्पत्तेः। कविभिरिति शेषः। प-

पर्यायेण द्वयोस्तच्चेदुपमेयोपमा मता ॥
धर्मोऽर्थ इव पूर्णश्रीरर्थो धर्म इव त्वयि ॥ ९ ॥

रस्परतुल्यत्वेन इतरसादृश्यव्यवच्छेदः फलमस्याः। हे राजन् त्वयि धर्मः सुकृतं अर्थः समृद्धिरिव पूर्णश्रीः संपूर्णशोभः अस्तीति शेषः। अर्थश्च धर्म इव पूर्णश्रीः अस्तीत्यस्य गम्यमानत्वात्प्रायेणाप्रयोगः। अस्ति भवतिपरः। प्रथमपु-

१ पूर्वोदाहरणे श्रीमत्त्वस्य धर्मस्योपादानमस्ति इह तु गगनादेर्वैपुल्यादिधर्मस्य तन्नास्तीति विशेषः। २ खमिव जलं जलमिव खं हंस इव चंद्रश्चंद्र इव हंसः। कुमुदाकारास्तारास्ताराकाराणि कुमुदानि। पूर्वत्र पूर्णश्रीरिति धर्म उपात्तः [illegible] आमत्रेरों नोपात्त इति भेदः।

रूपोऽप्रयुज्यमानोऽप्यस्तीति भाष्योक्तेः। अनुलोमो विलोमश्च क्रमः पर्याय इ-ष्यत इति शाश्वतः ॥ ९ ॥ प्रतीपमिति ॥ उपमानस्य अधिकगुणस्य उपमेय-त्वप्रकल्पनं न्यूनगुणत्ववर्णनं प्रतीपम्। प्रतिगच्छंति आपो यस्मिन्निति प्रतीपं निम्नोन्नतस्थलं तत्सादृश्यादलंकारे लक्षणा। ऋक्पूरित्यादिना समासांतोऽका-

प्रतीपमुपमानस्योपमेयत्वप्रकल्पनम् ॥
त्वल्लोचनसमं पद्मं त्वद्वक्त्रसदृशो विधुः ॥ १० ॥

रप्रत्ययः। द्व्यंतरुपसर्गेभ्योऽप ईदिति ईदादेशः। प्रतीपादयः स्वभावाद्गौणा ए-वेति प्रांचो वृद्धाः। पद्मं कुमलं त्वल्लोचनसमं त्वन्नेत्रतुल्यं रुचेति शेषः। अत्र

१ यत्त्वन्नेत्रसमानकांति सलिले मग्नं तदिंदीवरं मेघैरंतरितः प्रिये तव मुखच्छायानुकारी शशी। येऽपि त्वद्गमना-नुसारिगतयस्ते राजहंसा गतास्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते ॥ अत्र कांतीत्यादि धर्मोपादानात्पूर्वोदाहरण-वैलक्षण्यं बोध्यम्।

पद्मस्य वर्ण्यत्वनिबंधनान्नेत्रस्य च तद्विपरीतत्वकल्पनाच्च लक्षणानुगमः । विधुश्चंद्रस्त्वद्वक्रसदृशः। हेप्रिये इति संबोधनं कल्प्यम्। चारुत्वद्योतनार्थं पुनरप्युदाहरणम् ॥१०॥ अन्योति ॥ अन्योपमेयलाभेन अन्यस्य उपमेयत्वलाभेन वर्ण्यस्य प्रस्तुतस्यानादरश्च तत्प्रतीपम् । उपमानलाभकथनेन स्तुतिः पर्यवसायिनी ।

अन्योपमेयलाभेन वर्ण्यस्यानादरश्च तत् ॥
अलं गर्वेण ते वक्रकांत्या चंद्रोऽपि तादृशः ॥ ११ ॥

हेप्रिये ते वक्रकांत्या मुखशोभया हेतुना गर्वेणालं न किंचित्साध्यम् । गम्यमानापि क्रिया कारकविभक्तिप्रयोजिकेति करणत्वात्तृतीया । अन्यथा चतुर्थी स्यात् । चंद्रोऽपि तादृशः त्वद्वक्रसदृशः । चंद्रस्य न्यूनगुणत्वात्प्रतीपम् ॥ ११ ॥

१ गर्वमसंभाव्यमिमं लोचनयुगलेन किं वहसि मुग्धे । संतीदृशानि दिशि दिशि सरस्सु ननु नीलनलिनानि ॥ पूर्वोदाहरणे कांत्येति समानधर्मोपादानमिह तु नेति भेदः ।

वर्ण्योंति ॥ वर्ण्योपमेयलाभेन वर्ण्य च तदुपमेयं च वर्ण्योपमेयं तस्य लाभेन प्राप्त्या भावप्रधाननिर्देशो वा । अन्यस्यानादरोऽपि तथा प्रतीपमित्यर्थः। हे- मृत्यो ते तव क्रौर्यदर्पः क्रूरत्वगर्वः कः । प्रश्ने कुत्सायां वा किंशब्दः । कुत्साप्रश्न-

वर्ण्योपमेयलाभेन तथान्यस्याप्यनादरः ॥
कः क्रौर्यदर्पस्ते मृत्यो त्वत्तुल्याः संति हि स्त्रियः ॥ १२ ॥
वर्ण्येनान्यस्योपमाया[2] अनिष्पत्तिवचश्च तत् ॥

वितर्केषु क्षेपे किंशब्द उच्यत इति शाश्वतः । हि यस्मात्स्त्रियः त्वत्तुल्याः त्वंदु[3] पमेयभूताः संति । अतो निरुपमत्वगर्वो व्यर्थ इति भावः ॥ १२ ॥ वर्ण्येनेति ॥ वर्ण्येन सह अन्यस्य उपमायाः अनिष्पत्तिवचः असंभवोक्तिरपि तत्प्रतीपम् । हे-

१ अहमेव गुरुः सुदारुणानामिति हालाहल मा स्म तात दृप्यः । ननु संति भवादृशानि भूयो भुवनेऽस्मिन्वचनानि दुर्जनानाम् । २ निरूपितत्वं तृतीयार्थः वर्ण्यनिरूपिता यान्यस्यावर्ण्यस्योपमा तस्या इत्यर्थः । ३ त्वं उपमेयभूतो यासां ताः ।

मुग्धाक्षि अंबुजं त्वन्मुखाभं त्वद्वक्त्रसदृशमिति मुधापवादो मिथ्याभिशापो न तु साम्यम्।किल प्रसिद्धम्॥१३॥प्रतीपमिति॥उपमानस्य कैमर्थ्यं व्यर्थत्वं मन्यते यत्तदपि प्रतीपम्। यत्तदोरध्याहारः।चेद्यदि तस्याः वदनं दृष्टं तर्हि पद्मेन किं इं-

मुधापवादो मुग्धाक्षि त्वन्मुखाभं किलांबुजम् ॥ १३ ॥
प्रतीपमुपमानस्य कैमर्थ्यमपि मन्यते ॥
दृष्टं[२] चेद्वदनं तस्याः किं पद्मेन किमिंदुना ॥ १४ ॥
विषय्यभेदताद्रूप्यरंजनं विषयस्य यत् ॥

दुना च किं न किं चित्साध्यमित्यर्थः। क्षेपे किंशब्दः ॥ १४ ॥ विषयीति ॥ यद्विषयस्य उपमेयस्य विषय्यभेदताद्रूप्यरंजनं विषयिण उपमानस्य अभेदता-

१ आकर्ण्य सरोजाक्षि वचनीयमिदं भुवि। शशांकस्तव वक्त्रेण पामरैरुपमीयते। २ तदोजसस्तद्यशसः स्थिताविमौ वृथेति चित्ते कुरुते यदा यदा। तनोति भानोः परिवेषकैतवात्तदा विधिः कुंडलनां विधोरपि।

द्रूप्याभ्यां भेदाभावतद्रूपत्वाभ्यां रंजनं रक्तीकरणं तद्रूपकम्। तदाधिक्यन्यूनत्वानुभयोक्तिभिः आधिक्योक्त्या न्यूनत्वोक्त्या अनुभयोक्त्या च त्रिधा भवति। रूपवत्करोतीति रूपयतीति रूपको लक्षणाविशेषः । रूपयुक्तं करोतीत्यर्थः ।

रूपकं तत्त्रिधाधिक्यन्यूनत्वानुभयोक्तिभिः ॥ १५ ॥

अयं हि धूर्जटिः साक्षाद्येन दग्धाः पुरः क्षणात् ॥

अयमास्ते विना शंभुस्तार्तीयीकविलोचनम् ॥ १६ ॥

सोऽस्त्यस्मिन्निति रूपकमलंकारः । लक्षणाप्रपंचस्तु मत्कृते कोविदानंदे द्रष्टव्यः ॥ १५ ॥ अयमिति ॥ प्रतिलोमक्रमेणोदाहरणान्याह । विवक्षायाः स्वातं-

---

१ चंद्रज्योत्स्नाविशदपुलिने सैकतेऽस्मिन्सरय्वा वादद्यूतं चिरतरमभूत्सिद्धयूनोः कयोश्चित् । एको वक्ति प्रथमनिहतं कैटभं कंसमन्यस्तत्त्वं स त्वं कथय भगवन्को हतस्तत्र पूर्वम् ॥ अयं हीत्युदाहरणेऽभेदारोपहेतुभूतं पुरदाहकत्वरूपं साधर्म्यमुपात्तम्। इह तु जगद्रक्षकत्वादिकं तद्गम्यमानमिति भेदः । २ वेधा द्वेधा भ्रमं चक्रे कांतासु कनकेषु च । तासु तेष्वप्यनासक्तः साक्षाद्भर्गो नराकृतिः ॥ अयमास्त इत्युदाहरणे शंभुसादृश्यं गम्यमानमिह त्वनासक्तिरूपं तदुपात्तमिति भेदः ।

त्र्यात् । वक्तुर्विवक्षापूर्विका शब्दार्थप्रतिपत्तिरिति व्याडिवचनात् । अयं राजा साक्षाद्धूर्जटिः प्रत्यक्षं शिव एव । हिशब्दो निश्चयार्थे । येन क्षणात् पुरः । यद्यपि क्षणेनैव वक्तुं युक्तम् [2]अपवर्गे तृतीयेति सूत्रात् । तथापि बुद्धिकल्पितापादानत्वस्वीकारात्पंचमी । दग्धाः रिपूणामिति शेषः । अत्र अनुभवाभेदरूपके राजा

[3]शंभुर्विश्वमवत्यद्य स्वीकृत्य समदृष्टिताम् ॥

अयं तार्तीयीकविलोचनं विना तृतीयनेत्रं विना । तृतीयशब्दात्स्वार्थे ईकक्प्रत्ययः । शंभुरास्ते शिवो वर्तते । आस उपवेशने इत्यस्य वृत्त्यर्थत्वं धातूनामनेकार्थत्वात् न्यूनाभेदरूपकम् ॥ १६ ॥ शंभुरिति ॥ अद्येदानीं एषः इति पाठे वर्णनीयोऽसौ राजा शंभुः समदृष्टितां द्विनेत्रत्वं स्वीकृत्य गृहीत्वा । सम-

---

१ राज्ञा । २ अपवर्गे तृतीया । अपवर्गः फलप्राप्तिस्तस्यां द्योत्यायां कालाध्वनोरत्यंतसंयोगे तृतीया स्यात् । ३ त्वय्यागते किमिति वेपत एव सिंधुस्त्वं सेतुमंथकृदतः किमसौ बिभेति । द्वीपांतरेऽपि नहि तेऽस्त्यवशंवदोऽद्य त्वां राजपुंगव निषेवत एव लक्ष्मीः ॥ शंभुर्विश्वमित्यत्र विश्वसंरक्षकत्वं सादृश्यमुपात्तम् । इह तु नेति भेदः ।

दृष्टिना स्वीकारस्तु भाललोचस्य गोपनेन विवक्षितः। अन्यथा आधिक्यं न सिध्येत्। पूर्वं विषमदृष्टित्वादिति भावः। विश्वमवति जगद्रक्षति न तु संहरतीति भावः। अत्राधिक्यभेदरूपकम्। ताद्रूप्योदाहरणान्याह। अस्याः कामि-

अस्या[1] मुखेंदुना लब्धे नेत्रानंदे किमिंदुना ॥ १७ ॥
साध्वीयमपरा[2] लक्ष्मीरसुधासागरोदिता ॥

न्याः मुखेंदुना वक्रचंद्रेण नेत्रानंदे लब्धे प्राप्ते सति इंदुना किं प्रयोजनं न किंचिदित्यर्थः। अत्रानुभयताद्रूप्यरूपकम्॥ १७ ॥ साध्वीति इयं साध्वी पतिव्रता असुधासागरोदिता सुधासमुद्रादनुत्पन्ना अपरा द्वितीया लक्ष्मीरिति

---

१ किं पद्मस्य रुचिं न हंति नयनानंदं विधत्ते न किं वृद्धिं वा झषकेतनस्य कुरुते नालोकमात्रेण किम्। वक्त्रेंदौ तव सत्ययं यदपरः शीतांशुरुज्जृंभते दर्पः स्यादमृतेन चेदिह तदप्यस्त्येव बिंबाधरे॥ अस्या मुखेंदुनेत्यत्र किमिंदुनेति पुनरुपादानमात्रं भेदविवक्षाज्ञापकम् इह। त्वपरशब्दस्याप्युपादानमिति विशेषः। २ अचतुर्वदनो ब्रह्मा द्विबाहुरपरो हरिः। अभाललोचनः शंभुर्भगवान्बादरायणः।

न्यूनताद्रूप्यरूपकम्। अयं मुखचंद्रः कलंकिनश्चंद्राददतिरिच्यते। निष्कलंकत्वा-द्धिको भवतीत्यधिकताद्रूप्यरूपकम् ॥ १८ ॥ परिणामइति ॥ विषयी आरोपविषययुक्तश्चंद्रादिः विषयात्मना विषयो मुखादिः तद्रूपेण। क्रियार्थः क्रियायै

अयं कलंकिनश्चंद्रान्मुखचंद्रोऽतिरिच्यते ॥ १८ ॥

परिणामः क्रियार्थश्चेद्विषयी विषयात्मना ॥

इति क्रियार्थः क्रियासाधकश्चेत्तर्हि परिणामः। उदाहरणम्। मदिरेक्षणा मादकनेत्रा काचित्प्रसन्नेन दृगब्जेन दृग्भूतं अब्जं दृगब्जं तेन। मध्यमपदलोपी समासः न तु मयूरव्यंसकादिः। तस्य रूपकविषयत्वात्। वीक्षते पश्यति कमलं हि

१ किमसुभिर्ग्लपितैर्जड मन्यसे मयि निमज्जतु भीमसुतामनः। मम किल श्रुतिमाह तदर्थिकां नलमुखेंदुपरां विबुधः स्मरः ॥ अत्र दमयंतीकृतचंद्रोपालंभे प्रसिद्धचंद्रो न निर्वाणकालिकमनःप्रवेशतात्पर्यविषयः। मनश्चंद्रे लीयत इति श्रुतेः। किं तु नलमुखचंद्र एवेति। ततोऽस्याधिक्यप्रतिपादनादधिकताद्रूप्यरूपकम्। रूपकस्य सावयवत्वनिरवयवत्वाभेदप्रपंचनं तु चित्रमीमांसायां द्रष्टव्यम्।

स्वयं द्रष्टुमशक्त नेत्ररूप भूत्वा पश्यतीति परिणामः। अत्र अदृक् दृक् संपद्यते तथाभूतं दृग्भूतमिति प्रथमार्थे तत्पुरुषः। एवं च परिणामाभिव्यक्तिर्न तु मयूरव्यंसकादिः। समासांतस्य रूपकविषयत्वादिति नव्या एवमन्यत्र ॥१९॥ बहुभि-

प्रसन्नेन दृगब्जेन वीक्षते मदिरेक्षणा ॥ १९ ॥
बहुभिर्बहुधोल्लेखादेकस्योल्लेख इष्यते ॥

रिति ॥ एकस्य वस्तुनः बहुभिः कर्तृभिः बहुधा बहुभिः प्रकारैः उल्लेखाद्वितर्काद्धेतोरुल्लेखनामालंकार इष्यते । उदाहरणम् । स कृष्णः स्त्रीभिः कामः कंदर्परूपः ऐक्षि वितर्कितः। अर्थिभिर्याचकैः स्वर्गद्रुमरूप ऐक्षि। शत्रुभिः कालः मृ-

१ तीर्त्वा भूतेशमौलिस्त्रजममरधुनीमात्मनासौ तृतीयस्तस्मै सौमित्रिमैत्रीमयमुपकृतवानांतरं नाविकाय। व्यामग्राह्यस्तनीभिः शबरयुवतिभिः कौतुकोदंचदक्षं कृच्छ्रादन्वीयमानः क्षणमजलमथो चित्रकूटं प्रतस्थे ।

( १ मूल्यम् । २ कौतुकेन उदंचती अक्षिणी यस्मिन्कर्मणि यथा तथा ।)

त्युरूप ऐक्षि। अत्र रूपकमपि ज्ञेयम् ॥२०॥ एकेनेति ॥ एकेन कर्त्रा एकस्येति शेषः। विषयभेदतः स्थानकभेदात्। बहुधा उल्लेखेऽपि असावुल्लेखो ज्ञेयः। उदाहरणम्। अयं राजा वचसि वचनविषये गुरुर्महान्वाचस्पतिश्च। कीर्तौ यशसि

स्त्रीभिः कामोऽर्थिभिः स्वर्द्रुः कालः शत्रुभिरैक्षि सः ॥२०॥
एकेन बहुधोल्लेखेऽप्यसौ विषयभेदतः॥
गुरुर्वचस्यर्जुनोऽयं कीर्तौ भीष्मः शरासने ॥ २१ ॥
स्यात्स्मृतिभ्रांतिसंदेहैस्तदंकालंकृतित्रयम् ॥

अर्जुनः शुभ्रः पार्थश्च। शरासने धनुषि भीष्मो भयंकरो गांगेयश्च। अत्र श्लेषो रूपकं च ज्ञेयम् ॥२१॥ स्यादिति ॥ स्मृतिभ्रांतिसंदेहैः स्मरणभ्रमसंशयैः करणे-

१ वितर्केऽपि। २ गजत्रातेति वृद्धाभिः श्रीकांत इति यौवतैः। यथास्थितश्च बालाभिर्दृष्टः शौरिः सकौतुकम्। ३ अकृशं कुचयोः कृशं विलग्ने विपुलं चक्षुषि विस्तृतं नितंबे। अधरेऽरुणिमाविरस्तु चित्ते करुणाशालि कपालिभागधेयम्।

स्तदकालक्रांतत्रय त अकाः यस्य तत्तदक तद्वाचकशब्दयुक्तनामक अलकृतीनां त्रयं स्यात्। स्मृतिवर्णने स्मृतिमान् भ्रांतिवर्णने भ्रांतिमान् संदेहवर्णने संदेहः। प्रत्वर्थीयोऽकारप्रत्ययांतः संदेह इति केचित्। प्रथमज्ञानमनुभवः तस्य पुनर्नवी-

पंकजं पश्यतः कांतामुखं मे गाहते मनः ॥ २२ ॥

अयं[2] प्रमत्तमधुपस्त्वन्मुखं वेत्ति पंकजम् ॥

भावः स्मृतिः। मिथ्याज्ञानं भ्रांतिः। अनुभवभ्रमयोगः संदेहः। उदाहरणम्। पंकजं पश्यतः मे मनः कांतामुखं गाहते प्रविशति स्मरतीत्यर्थः॥२२॥अयमिति॥ अयं प्रमत्तंमधुपः उन्मत्तभ्रमरः मत्तो मद्यपश्चेति श्लेषः। त्वन्मुखं पंकजं वेत्ति। अ-

१ दिव्यानामपि कृतविस्मयां पुरस्तादंभस्तः स्फुरदरविंदचारुहस्ताम्। उद्वीक्ष्य श्रियमिव कांचिदुत्तरंतीमस्मार्षीज्जलनिधिमंथनस्य शौरिः॥ पूर्वत्र स्मृतिमदुदाहरणे सदृशस्यैव स्मृतिरत्र सदृशलक्ष्मीस्मृतिपूर्वकं तत्संबंधिनो जलनिधिमंथनस्यापि स्मृतिरिति भेदः। २ पलाशकुसुमभ्रांत्या शुकतुंडे पतत्यालिः। सोऽपि जंबूफलभ्रांत्या तमालिं धर्तुमिच्छति॥ अत्रान्योन्यविषयभ्रांतिनिबंधनः पूर्वोदाहरणाद्विशेषः।

स्माकं तु पंकजं वा सुधांशुर्वेति निर्णयो नास्ति किंतु संदेहद्वयमस्तीत्यर्थः । मधुपस्य तु भ्रांतिरेव ॥ २३ ॥ शुद्धेति ॥ अन्यस्याप्रस्तुतस्य आरोपार्थः आरोपहे-

पंकजं वा सुधांशुर्वेत्यस्माकं तु न निर्णयः ॥ २३ ॥

शुद्धापह्नुतिरन्यस्यारोपार्थो धर्मनिन्हवः ॥

नायं सुधांशुः किं तर्हि व्योमगंगासरोरुहम् ॥ २४ ॥

तुकः यो धर्मनिन्हवः अपलापः निषेध इति यावत् । शुद्धा केवला अपन्हुतिरलंकृतिर्भवति । शुद्धत्वं च निह्नुत्वस्य परस्मिन्नारोपाभावः । उदाहर-

१ जीवनग्रहणे नम्रा गृहीत्वा पुनरुन्नताः । किं कनिष्ठाः किमु ज्येष्ठा घटीयंत्रस्य दुर्जनाः ॥ पूर्वोदाहृतसंदेहः प्रसिद्धकोटिकः अयं तु कल्पितकोटिक इति भेदः । २ अंकं केऽपि शशंकिरे जलनिधेः पंकं परे मेनिरे सारंगं कतिचिच्च संजगदिरे भूच्छायमैच्छन्परे । इंदौ यद्दलितेंद्रनीलशकलश्यामं दरीदृश्यते तत्सांद्रं निशि पीतमंधतमसं कुक्षिस्थमाचक्ष्महे ॥ नायं सुधांशुरित्यत्र नेतिशब्दोपात्तत्वाच्छाब्दः । इह तु परमतत्त्वोत्कीर्तनेन स्वानभिमतत्वसूचनादर्थगम्य इत्यर्थः । एकत्रानेकापह्नवरूपतयाप्यत्र वैचित्र्यं बोध्यम् ।

( १ कवयः । २ वयं त्विति शेषः । )

णम् । अयं दृश्यमानः सुधांशुश्चंद्रो न । तर्हि किं व्योमगंगासरोरुहं स्वर्गंगापुंडरीकम् । अत्र सर्वनाम्ना धर्मनिर्देशः ॥ २४ ॥ स इति ॥ स धर्मनिह्नवः युक्तिपूर्वो हेतुयुक्तश्चेत्तर्हि हेत्वपन्हुतिरुच्यते । हेतुयुक्ता अपन्हुतिर्हेत्वपन्हुतिः । उदाहरणम् । दृश्यमानः तीव्रः संतापकारी अयमिंदुर्न निशि रात्रावर्कोऽपि न

स एव युक्तिपूर्वश्चेदुच्यते हेत्वपन्हुतिः ॥
नेंदुस्तीव्रो न निश्यर्कः सिंधोरौर्वोऽयमुत्थितः ॥ २५ ॥

स्यात् उदित इति शेषः । तर्हि कः सिंधोरुत्थित और्वः । और्वस्तु वाडवो वडवानल इत्यमरः । हरिवंशे उर्वस्य मुनेः क्रोधाग्निः सागरे स्थापित इति प्रसिद्धम् । कालिकापुराणे च कामदाहे हरक्रोधाग्निर्वडवारूपेण ब्रह्मणा जठरे गृहीतोऽद्यापि

१ मंथानभूमिधरमूलशिलासहस्रसंघट्टनव्रणकिणः स्फुरतींदुमध्ये । छायामृगः शशक इत्यपि पामरोक्तिस्तेषां कथंचिदपि तत्र नहि प्रसक्तिः ॥ मंथानश्चासौ भूमिधरः तस्य मूलानि तेषां शिलाः तासां सहस्रं तेन संघट्टः तस्य व्रणः तस्य किणः ।

समुद्रे रक्षित इति स्थितम्। तन्मध्ये प्रथमपक्षे उर्वाज्जात औौर्व इति व्युत्पत्तिः२५ अन्यत्रेति ॥ अन्यत्र अन्यवस्तुनि तस्य प्रकृतस्यारोपार्थः यः धर्मनिन्हवः सः पर्यस्तापन्हुतिः। उदाहरणम्। अयं सुधांशुश्चंद्रो न तर्हि किं वस्तु सुंधांशु-

अन्यत्रतस्यारोपार्थः पर्यस्तापन्हुतिश्च सः ॥
नायं सुधांशुः किं तर्हि सुधांशुः प्रेयसीमुखम् ॥ २६ ॥
भ्रांतापन्हुतिरन्यस्य शंकायां भ्रांतिवारणे ॥

रिति प्रश्नः। प्रेयसीमुखं सुधांशुरित्युत्तरम्। चंद्रे चंद्रत्वनिन्हवः प्रियामुखे त-दारोपार्थः॥२६॥ भ्रांतेति ॥ अन्यस्य शंकायां सत्यां प्रस्तुतेन भ्रांतिवारणे कृते सति भ्रांतापन्हुतिः। उदाहरणम्। हे सखि सोत्कंपं तापं कः करोति इति श्रुत्वा

१ हालाहलो नैव विषं विषं रमा जनाः परं व्यत्ययमत्र मन्वते। निपीय जागर्ति सुखेन तं शिवः स्पृशन्निमां मुह्यति निद्रया हरिः। ( १ किंतु इत्यध्याहारः। २ केवलम्। ३ वैपरीत्यम्। )

गयोग्यत्वाच्च । यथाह वामनः। विशेषणमात्रप्रयोगो विशेष्यप्रतिपत्तौ सागरां-
बरादिवदिति । असाधारणविशेषणस्य विशेष्यनामधेयत्वादिति तदभिप्रायः
॥ ६१ ॥ नानार्थेति ॥ वर्ण्यावर्ण्योभयास्पदः प्रकृताप्रकृतोभयविषयः नाना-

नानार्थसंश्रयः श्लेषो वर्ण्यावर्ण्योभयास्पदः ॥
सर्वदोमाधवः पायात्स योगंगामदीधरत् ॥ ६२ ॥

र्थसंश्रयः नानाभिधस्यार्थस्याश्रयणं श्लेषः श्लिष्यतोऽर्थावस्मिनिति व्युत्पतेः।
क्रमेणोदाहरणानि । सर्वदः स माधवः विष्णुः मायाः रमायाः धवः पतिः म-
धोर्गोत्रापत्यमिति वा व्युत्पत्तेः। पायात् रक्षतु यो विष्णुः अगं मंदरपर्वतं कृ-

१ त्रातः काकोदरो येन द्रोग्धापि करुणात्मना । पूतनामा रणख्यातः समेऽस्तु शरणं प्रभुः ॥ त्रात इति येन करुणा-युक्तांतःकरणेन द्रोहकर्तापि अदरो भयशून्यः काकस्त्रातो रक्षितः न तु हतः । स पवित्रनामा रणे ख्याते । विभू रामो मे शरणमस्त्वित्यर्थः । कृष्णपक्षे तु काकोदरः कालियसर्पः पूतनाया मारणेन ख्यात इति विशेषः । अत्र स्तोतव्यत्वेन प्रकृतयोः श्लेषः ।

र्मावतारेण गोवर्धनं वा कृष्णावतारेण गां भूमिं वराहावतारेण अदीधरत् द-धारेति हरिपक्षे। सर्वदा नित्यं स उमाधवः पार्वतीपतिः पायात् । यः गंगां ना-

[1]अब्जेन त्वन्मुखं तुल्यं हरिणाहितसक्तिना ॥

कनदीं जटायामदीधरदिति हरपक्षे। अयं प्रकृतश्लेषः हरिहरयोरुपास्यत्वेन प्र-कृतत्वात् ॥ ६२ ॥ अब्जेनेति ॥ त्वन्मुखं हरिणा हितसक्तिना मृगोत्पादितसं-

१ नीतानामाकुलीभावं लुब्धैर्भूरिशिलीमुखैः । सदृशे वनवृद्धानां कमलानां त्वदीक्षणे ॥ नीतानामिति । दयितां प्रति नायकोक्तिः । तव ईक्षणे नेत्रे कमलानां पद्मानां हरिणानां च सदृशे स्त इत्यन्वयः। कीदृशानाम्। वने जले अरण्ये च वृद्धिं प्राप्तानां तथा लुब्धैर्लोभशीलैर्भूरिभिः शिलीमुखैर्भ्रमरैराकुलीभावं व्याप्ततां नीतानामिति पद्मपक्षे । हरिणपक्षे तु लुब्धैर्व्याधैः कर्तृभिर्भूरिशिलीमुखैर्बाणैः करणभूतैराकुलीभावं चपलनां नीतानामित्यर्थः । मृगप्रभेदे कमल इति विश्वः । अत्रोपमानत्वेनाप्रकृतयोः पद्महरिणयोः श्लेषः । असावुदयमारूढः कांतिमान् रक्तमंडलः । राजा हरति लोकस्य हृदयं मृदुलैः करैः ।असाविति । उदयं शैलमभिवृद्धिं च रक्तं रक्तवर्णमनुरक्तं च मंडलं बिंबं देशाश्च राजा चंद्रो नृपश्च। मृदुलैरभिनवैरल्पैश्च करैः किरणैर्ग्राह्यधनैश्च इत्यर्थः। अत्र राजा हरति लोकस्येति वर्णनप्रकृतस्य प्रत्यग्रोदितचंद्रस्याप्रकृतस्य नवाभिषिक्तस्य नृपतेः श्लेषः । (१ प्रत्यग्रोदितचंद्रस्य अभिनवोदितचंद्रस्येत्यर्थः । )

गेंन अब्जेन चंद्रेण। अब्जो जैवातृकः सोम इति हैमः। तुल्यं सदृशं वर्तते। अथवा हरिणा सूर्येण आहितशक्तिना उत्पादितसामर्थ्येन। हरिर्वातार्कचंद्रैणयमोपेंद्रमरीचिषु इति विश्वः। अब्जेन जलजेन तुल्यं इत्यप्रकृतश्लेषः। मुखस्य व-

उच्चरद्भूरिकीलालः शुशुभे वाहिनीपतिः ॥ ६३ ॥

र्ण्यत्वेन अब्जयोरप्रकृतत्वात् श्लेषालंकारे सकारशकारयोरभेदोपचारः प्रसिद्ध एव। उच्चरद्भूरिकीलालः प्रस्रवद्बहुरुधिरो वाहिनीपतिः भीष्मः शुशुभे इति प्रकृतार्थः। उच्चरद्भूरिकीलालः प्रस्रवद्बहुलोदकः। कीलालं रुधिरांभसोरिति शा-

---

१ आबद्धकृत्रिमसटाजटिलांसभित्तिरारोपितो मृगपतेः पदवीं यदि श्वा। मत्तेभकुंभतटपाटनलंपटस्य नादं करिष्यति कथं हरिणाधिपस्य ॥ आबद्धाः याः कृत्रिमाः सटाः स्कंधलोमानि तैर्जटिला व्याप्ता अंसभित्तिः स्कंधदेशो यस्यैवंभूतः श्वा यादि मृगपतेः सिंहस्य पदवीमारोपितः तथापि मत्तानामिभानां गजानां कुंभतटस्यं पाटने विदारणे लंपटस्य व्यसनिनो हरिणानामधिपस्य नादं सिंहनादं कथं करिष्यतीत्यर्थः। अत्र शुनकस्य निंदा निंद्यत्वेन प्रस्तुते तत्सरूपे कृत्रिमवेषव्यवहारादिमात्रेण विद्वत्ताभिनयनवति वैधेये पर्यवस्यति।

श्वतः। वाहिनीपतिः नदीपतिः। नदी सेना च वाहिनीतिं यादवः। शुशुभे इत्यप्र-
कृतार्थः। अत्र संभगः शब्दश्लेषः आभंगस्त्वर्थश्लेष इति केचित्। अत्र विशेषो-
मत्कृते कोविदानंदे द्रष्टव्यः॥६३॥ अप्रस्तुतेति॥ अत्र अप्रस्तुतप्रशंसानामालं-
कारः स्यात्। यत्र सा अप्रस्तुतार्थस्य प्रशंसावर्णना प्रस्तुताश्रया प्रस्तुतमाश्र-

अप्रस्तुतप्रशंसा स्यात् सा यत्र प्रस्तुताश्रया ॥
एकः कृती शकुंतेषु योऽन्यं शक्रान्न याचते ॥ ६४ ॥

यतोति प्रस्तुताश्रया प्रकृतार्थपरा भवति। उदाहरणम्। शकुंतेषु पक्षिषु। शकुं-
तपक्षिशकुनिशाकुंतशकुनद्विजा इत्यमरः। एकः चातक एव कृती कृतमनेनेति
कृती कृतार्थः। इष्टादिभ्यश्चेतीनिप्रत्ययः। यः शक्रादन्यं अन्यारादित्यादिना
अन्यशब्दयोगे पंचमी। न याचते किं तु शक्रमेव याचते। अत्र याचकेष्वेक

एवं मनस्वी धन्यः यः सार्वभौमादन्यं न याचत इति तुल्ये प्रकृतार्थे पर्यवसानम्॥६४॥ कार्य इति ॥ कार्ये प्रस्तुते सति तदन्यस्य कारणस्य वचःकथननिमित्ते कारणे प्रस्तुते सति तदन्यस्य कार्यस्य। एवं सामान्ये विशेषस्य विशेषे च सामान्यस्य तुल्ये च तुल्यस्येत्यसौ पंचधा भवति । तत्र तुल्योदाहरणं दर्शितम्। अस्य श्लोकस्य प्रक्षिप्तत्वादन्यान्युदाहरंणानि न संति । ततो नूतनानि

कार्ये निमित्ते सामान्ये विशेषे प्रस्तुते सति ॥

कृत्वा बालबोधाय प्रदर्श्यंते । संसारानलतप्तोऽयं हरिं शरणमिच्छति । हरेर्भक्ता हिं बहवो मुक्ताः संसारबंधनात् ॥१॥ अत्र पूर्वार्धे संसारानलतप्तस्य तापशांतिलक्षणमुक्तिरूपकार्ये प्रस्तुते हरिशरणरूपकारणमभिहितं ततः कार्यावगतिः । अत्र उत्तरार्धे च मुमुक्षुभिर्हरिभक्तिः सर्वथा कर्तव्येति कारणे प्रस्तुते सति भक्तजनमुक्तिरूपकार्यमभिहितम् ततः कारणावगतिः ॥ १ ॥ अजा-

मिलो दुराचारः स्मृतिमात्रादमुच्यत । धन्यो नारायणं जल्पन्नज्ञानादपि मुक्तिभाक् ॥ २ ॥ अत्र पूर्वार्धे नवविधभक्तिसामान्यमाहात्म्ये प्रस्तुते स्मृतिरूपविशेषमाहात्म्यमभिहितं ततः सामान्यावगतिः । उत्तरार्धे च अजामिलो ध-

तदन्यस्य वचस्तुल्ये तुल्यस्येति च पंचधा ॥ ६५ ॥

१ सामान्यनिबंधना यथा—विधाय वैरं सामर्षे नरोऽरौ य उदासते । प्रक्षिप्योदर्चिषं कक्षे शेरते तेऽभिमारुतम् ॥ विधायेति । ये नरो मनुष्याः सक्रोधेऽरो शत्रौ वैरं विधायोदासीना भवंति ते कक्षे तृणं उदर्चिषमग्निं निक्षिप्याभिमारुतं पवनाभिमुखं शेरते निद्रां कुर्वंतीत्यर्थः । अत्र प्रागेव सामर्षे शिशुपाले रुक्मिणीहरणादिना वैरं दृढीकृतवता कृष्णेन तस्मिन्नुदासितुमयुक्तमिति विशेष्य वक्तव्येऽर्थे प्रस्तुते तत्प्रत्यायनार्थं सामान्यमभिहितम् । विशेषनिबंधनो यथा—अंकाधिरोपितमृगश्चंद्रमा मृगलांछनः । केसरी निष्ठुरक्षिप्तमृगयूथो मृगाधिपः ॥ अंकेति । मृगलांछन इत्युच्यत इति शेषः । निष्ठुरं क्षिप्तानि मृगयूथानि येन तादृशः केसरी सिंहो मृगाधिप इत्युच्यत इति शेषः । अत्र कृष्णं प्रति बलभद्रवाक्ये मार्दवं दूषणपरं पूर्वप्रस्तावनानुसारेण क्रूर एव ख्यातिभाग्भवति न तु मृदुरिति सामान्ये वक्तव्ये तत्प्रत्यायनार्थमप्रस्तुतो विशेषोऽभिहितः । कार्यनिबंधना यथा—नाथ त्वदंघ्रिनखधावनतोयलग्नास्तत्कांतिलेशकणिका जलधिं प्रविष्टाः । ता एव तस्य दहनेन घनीभवंत्यो नूनं समुद्रनवनीतपदं प्रपन्नाः ॥ नाथेति । हेनाथ विष्णो त्वच्चरणनखप्रक्षालनजले गंगारूपे लग्नाः तेषां नखानां कांतिलेशकणिकाः समुद्रं प्राप्तास्ता एव च कणिकास्तस्य जलधेर्मथनेन सांद्रतां प्राप्ता नूनं समुद्रसंबंधिनवनीतस्य

न्य इति विशेषे वक्तव्ये मुक्तिभाक् धन्य इति सामान्यमभिहितं ततो विशेषावगतिः ॥ २ ॥ हंसो धन्यो नदीरन्यास्त्यक्त्वा गंगां य आतिश्रः। प्रक्षिप्तकारिकाः प्रोक्ताः पंच भेदाः प्रदर्शिताः ॥ ३ ॥ अत्र भक्तो धन्यः यः क्षुद्रफलदा

प्रस्तुतेन प्रस्तुतस्य द्योतने प्रस्तुतांकुरः ॥

इतरदेवतोपासनास्त्यक्त्वा मुक्तिफलदां हरिभक्तिमेवाश्रित इति तुल्ये प्रस्तुते तत्तुल्यो वाक्यार्थोऽभिहितस्ततः प्रस्तुतावगतिः ॥ ३ ॥ ६५ ॥ प्रस्तुतेनेति ॥

---

चंद्रस्य पदं प्राप्ताः चंद्ररूपेण परिणता इत्यर्थः । अत्र भगवत्पादांबुजक्षालनतोयरूपायां दिव्यसरिति अलक्तकरसादिवद्भ्रमानां तया सह समुद्रं प्रविष्टानां स्वकांतिलेशकणिकानां परिणामतया संभाव्यमानेन समुद्रनवनीतपदवाच्येन चंद्रेण कार्येण नखकांत्युत्कर्षरूपं कारणं प्रतीयते । कारणनिबंधना यथा—हृतसारमिवेंदुमंडलं दमयंतीवदनाय वेधसा । कृतमध्यबिलं विलोक्यते धृतगंभीरखनी खनीलिम ॥ अत्राप्राकरणिकेंदुमंडलगततयोत्प्रेक्ष्यमाणेन दमयंतीवदननिर्माणार्थं सारांशहरणेन तत्कार्यरूपो वर्णनीयतया प्रस्तुतो दमयंतीवदनगतो लोकोत्तरसौंदर्यविशेषः प्रतीयते ।

१ अन्यासु तावदुपमर्दसहासु भृंग लोलं विनोदय मनः सुमनोलतासु । बालामजातरजसं कलिकामकाले व्यर्थं कदर्थयसि किं नवमल्लिकायाः ॥

प्रस्तुतेन वाक्यार्थेन प्रस्तुतस्य वाक्यार्थस्य द्योतने कृते सति प्रस्तुतांकुरः व्युत्पत्तिः स्पष्टा । उदाहरणम् । हे भृंग मालत्यां सत्याम् । सुमना मालती जातिरित्यमरः । मालती भिन्नेति केचित् । कंटकेद्धया केतक्या किं प्रयोजनं स्यात् ।

किं भृंग सत्यां मालत्यां केतक्या कंटकेद्धया ॥ ६६ ॥
पर्यायोक्तं तु गम्यस्य वचो भंग्यंतराश्रयम् ॥
नमस्तस्मै कृतौ येन मुधा राहुवधूकुचौ ॥ ६७ ॥

अत्र वाटिकायां कामुके शृण्वति सति भृंगं प्रतीयमुक्तिरित्युभयोः प्रस्तुतत्वाल्लक्षणानुगमः ॥ ६६ ॥ पर्यायेति ॥ गम्यस्य व्यंग्यस्य भंग्यंतराश्रयं भंग्यंतरं प्रकारांतरमाश्रयतीति तथाभूतं वचस्तु पर्यायोक्तं व्युत्पत्तिः स्पष्टा । प-

१ लोकं पश्यति यस्यांघ्रिः स यस्यांघ्रिं न पश्यति । ताभ्यामप्यपरिच्छेद्या विद्या विश्वगुरोस्तव ॥ अत्र गौतमः पतंजलिश्च स्वासाधारणरूपाभ्यां गम्यौ रूपांतराभ्यामभिहितौ ।

दीवरयोर्लीला शोभां धत्ते तत्सदृशीमित्यर्थः । पूर्वत्र यत्तच्छब्दाभ्यामैक्यारोपः इह तु परकीयत्वेनेति भेदः ॥ ५२ ॥ अपरामिति ॥ प्रकृतस्य क्रियया असत्सदर्थयोः असतोऽनिष्टस्य सतः इष्टस्य चार्थस्य च बोधनं अपरां तृतीयां

त्वन्नेत्रयुगलं धत्ते लीलां नीलांबुजन्मनोः ॥ ५२ ॥

अपरां बोधनं प्राहुः क्रियया सत्सदर्थयोः ॥

नश्येद्राजविरोधीति क्षीणं चंद्रोदये तमः ॥ ५३ ॥

निदर्शनां प्राहुः । उदाहरणम् । तमो ध्वांतं चंद्रोदये सति राजविरोधी चंद्रद्वेषि चेति श्लिष्टरूपकम् । राजा प्रभौ नृपे चंद्रे यक्षे क्षत्रियशक्रयोरिति विश्वः। नश्ये-

---

[1] अत्र पद्ये नेत्रयुगले नीलांबुजगतलीलापदारोपो निदर्शना। [2] उन्नतं पदमवाप्य यो लघुर्हेलयैव स पतेदिति ध्रुवम् । शैवशेखरगतः पृषत्कणश्चारुमारुतधुतः पतत्यधः ।

दिति बोधयत् क्षीणं भवतीत्यनिष्टार्थबोधनमेतत् ॥ ५३ ॥ उदयन्निति ॥ सविता भानुरुदयन्नुद्गच्छन्। उत्पूर्वादयतेरात्मनेपदस्यानित्यत्वाल्लटः शत्रादेशः। पद्मेषु श्रियं शोभां अर्पयति निदधाति। किं कुर्वन् सुहृदनुग्रहं स्वजनोपकारं स-

उदयन्नेव सविता पद्मेष्वर्पयति श्रियम् ॥
विभावयत्समृद्धीनां फलं सुहृदनुग्रहम् ॥ ५४ ॥
व्यतिरेको विशेषश्चेदुपमानोपमेययोः ॥

मृद्धीनां तेजोवृद्धीनां फलं फलस्वरूपं विभावयन् बोधयन् सन्नर्पयतीति पूर्वत्रा- न्वयः। इष्टार्थबोधमेतत् ॥५४॥ व्यतिरेक इति ॥ उपमानोपमेययोः विशेषः न्यू- नाधिकगुणत्वं चेद्वर्ण्यते तर्हि व्यतिरेको नामालंकारः। व्यतिरेकशब्दो भावे घ-

१ चूडामणिं पदे धत्ते यो देवं रविमागतम्। सतां कार्यातिथेयीति बोधयन्गृहमेधिनः ॥ यथायं पर्वतः समागतं रविं शिरसा संभावयति एवं गृहमेधी समागतं संतं पूजया संभावयेदिति।

त्रंतः। उदाहरणम् । संतः पुरुषाः शैला इव उन्नता उच्चैस्तराः । किं तु प्रकृतिकोमलाः स्वभावमृदवः । शैलास्तु न तथेति विशेषः । अत्रोपमानोपमेयशब्दोपादानादुपमाविशेषो व्यतिरेक इति सूचितं तेन न्यूनाधिकरूपकयोर्नातिव्याप्तिः। तत्र विषयविषयिशब्दाभ्यां व्यवहारात्किंचिन्न्यूनरूपकमधिकरूपकं

शैला इवोन्नताः संतः किं तु प्रकृतिकोमलाः ॥ ५५ ॥
सहोक्तिः सहभावश्चेद्भासते जनरंजनः ॥

च व्यतिरेकस्यैव प्रपंच इत्याहुः॥५५॥ सहोक्तिरिति ॥ चेद्यदि जनरंजनश्चमत्कारकारी सहभावः सहभवनं सहैव द्वयोरेकक्रियाकरणमित्यर्थः । भासते तर्हि सहोक्तिः स्पष्टम्। उदाहरणम्। तस्य कीर्त्तिः प्रत्यर्थिभिः सह दिशामंतमगमत्।

१ सुधैव वसुधा सत्यमानंदयति माननम् । महांतमपि किं त्वेषा संमोहयति संततम् ॥ अत्रोपमानभूतसुधात उपमेयभूत वसुधायाः संमोहकत्वेनैव विशेष इति भवति व्यतिरेकालंकार इति काव्यविलासे ।

शत्रवो दिगंतमगमन् । कीर्त्तिरपि तथेति नृपोत्कर्षव्यंजकत्वाच्चमत्कारः । सह शिष्येणागतो गुरुरित्यादौ नास्ति चमत्कारः ॥ ५६ ॥ विनोक्तिरिति ॥ चेद्यदि किंचिद्विना प्रस्तुतं वर्ण्यं हीनमपकृष्टमुच्यते तर्हि विनोक्तिः स्पष्टम् । उ-

दिगंतमगमत्तस्य कीर्तिः प्रत्यर्थिभिः सह ॥ ५६ ॥
विनोक्तिश्चेद्विना किंचित्प्रस्तुतं हीनमुच्यते ॥
विद्या हृद्यापि साऽवद्या विना विनयसंपदम् ॥ ५७ ॥

दाहरणम् । विद्या हृद्यापि हृदयंगमापि हृदयस्य प्रिया हृद्या हृदयस्य हृदित्यादिना यत्प्रत्यये हृदादेशः । विनयसंपदं सौजन्याधिक्यं विना सावद्या सदोषा

१ छाया संश्रयते तलं विटपिनां श्रांतेव पांथैः समं मूलं याति सरोजलस्य जलता म्लानेव मीनैः सह । आचामत्यहिमांशुदीधितिरपस्तस्येव लोकैः समं निद्रागर्भगृहं सह प्रविशति क्लांतेव कांताजनैः ॥ अमंदपुण्यसंदोहसंपादितमनिंदितम् । विना जन्मभृतां जन्म विना सुकृतसंचयम् ॥ इति काव्यविलासे ।

अवंद्यपण्येत्यादिना गर्ह्यार्थे अवद्यशब्दो निपातितः । विना शिष्येणागतो गुरुरित्यादौ हीनत्वानुक्तेर्नालंकारः ॥ ५७ ॥ तदिति ॥ चेद्यदि तत्प्रकृतं किंचिद्विना रम्यमुत्कृष्टमुच्यते तर्हि सापि विनोक्तिः कथ्यते । विधेयप्राधान्यात् स्त्री-

तच्चेत्किंचिद्विना रम्यं विनोक्तिः सापि कथ्यते ॥
विना खलैर्विभात्येषा राजेंद्र भवतः सभा ॥ ५८ ॥
समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य चेत् ॥

लिंगनिर्देशः । उदाहरणम् । हेराजेंद्र एषा भवतः सभा खलैर्विना विशेषेण विभाति । अभक्ष्यं विना सर्वमश्नातीऽत्यत्र नालंकारः । रम्यत्वानुक्तेः ॥ ५८ ॥ समासोक्तिरिति ॥ चेद्यदि प्रस्तुते प्रकृतार्थे अप्रस्तुतस्य परिस्फूर्तिः प्रतीतिः

---

१ आविर्भूते शशिनि तमसा मुच्यमानेव रात्रिर्नैशस्यार्चिर्हुतभुज इव च्छिन्नभूयिष्ठधूमा । मोहेनांतर्वरतनुरियं लक्ष्यते मुक्तकल्पा गंगारोधःपतनकलुषा गृह्णतीव प्रसादम् ।

स्यात्तर्हि समासोक्तिः । समासेन संक्षेपेण अर्थद्वयस्योक्तिरिति व्युत्पत्तेः । विशेषणमात्रस्यानेकार्थत्वात् संक्षेपः । विशेष्यस्यापि तथात्वे तु श्लेष एव । उदाहरणम् । अयं पुरोवर्ती चंद्रमाः कामुकश्च रक्तो लोहित आसक्तश्च सन् ऐंद्री

अयमैंद्रीमुखं पश्य रक्तश्चुंबति चंद्रमाः ॥ ५९ ॥

अलंकारः परिकरः साभिप्राये विशेषणे ॥

इंद्रस्येयमैंद्री प्राची परवनिता च तस्याः मुखं पुरोभागं वदनं च चुंबति स्पृशति मुखेनास्वादयति त्वं पश्य । अत्र रक्तादिपदश्लेषबलेन अप्रस्तुतयोः कामुकपरवनितयोः परिस्फूर्तिरिति लक्षणानुगमः । विस्तरः कुवलयानंदे द्रष्टव्यः ॥ ५८ ॥

अलंकार इति ॥ विशेषणे साभिप्राये साकूते व्यंग्यार्थसहिते सति इत्यर्थः ।

१ मयि मुकुलितमालतीलतायां स्थितवति यानि दिनानि संगतानि । अहह विधिविधानतोऽधुनैवं कथमपि तानि पुनर्न वीक्षितानि ॥ इति काव्यविलासे । व्यावल्गत्कुचभारमाकुलकचं व्यालोलहारावलि प्रेंखत्कुंडलशोभि गंडयुगलं प्रस्वेदिवक्त्रांबुजम् । शश्वद्दत्तकरप्रहारमधिकश्वासं रसादेतया यस्मात्कंदुकसादरं सुभगया संसेव्यसे यत्कृती ॥

परिकरो नामालंकारः। अलंकारशब्दस्य सर्वत्र प्रतीयमानत्वेऽपि ध्वनित्वनिषेधार्थमुपादानम्। परिकरोति प्रकृतार्थमुपकरोतीति परिकरः साभिप्रायशब्दः सोऽस्मिन्नस्तीति परिकरः। मत्वर्थी योऽच् प्रत्ययः। भूषणार्थाभावान्न सुडागमः। उदाहरणम्। सुधांशुकलितोत्तंसः सुधाकरनिबद्धावतंसः शिवो वस्तापं हरतु। अत्र

सुधांशुकलितोत्तंसस्तापं हरतु वः शिवः॥ ६० ॥
साभिप्राये विशेष्ये तु भवेत्परिकरांकुरः॥

विशेषणेन शिवस्य तापहरणसमर्थत्वं गम्यते। अत्र विशेषणस्य व्यंगार्थगर्भत्वेन प्रकृतोपयोगित्वं काव्यलिंगे तु वाच्यार्थस्यैव हेतुत्वमिति तस्मादस्य भेदः। तत्रापि व्यंग्यार्थश्चेदुभयोः संकर इति निर्णीतं कुवलयानंदे ॥ ६० ॥ साभि-

१ सुधांशुना कलितः कृत उत्तंसः शेखरो येन स इति। उत्तंसः कर्णपूरे स्याच्छेखरे चावतंसवदिति विश्वः। तव प्रसादात्कुसुमायुधोऽपि सहायमेकं मधुमेव लब्ध्वा। कुर्यां हरस्यापि पिनाकपाणेर्धैर्यच्युतिं के मम धन्विनोऽन्ये॥

प्राय इति ॥ विशेष्ये वर्णनीयनाम्नि साभिप्राये सति तु परिकरांकुरः । परिकरस्य अंकुर इति व्युत्पत्तेः । यथा वृक्षस्य अंकुरो वृक्षान्नातिरिक्तस्तथायमपि परिकरान्नातिरिक्तः । विशेष्यपदस्यैकत्वेन विस्ताराभावादंकुरत्वम् । उदाहरणम् । चतुर्भुजो देवः विष्णुः चतुर्णां पुरुषार्थानां धर्मार्थकाममोक्षाणां दातास्ति । ए-

चतुर्णां पुरुषार्थानां दाता देवश्चतुर्भुजः ॥ ६१ ॥

कैकहस्तेनैकैकस्य दाने विलंबो न स्यादिति सद्यो दातृत्वं गम्यते । अत्र चतुर्भुजशब्दस्य वैकुंठो जलशायनश्चतुर्भुजश्चेति हलायुधे चक्रपाणिश्चतुर्भुज इत्यमरकोशे च विष्णुनामत्वदर्शनात् । देवशब्दार्थं प्रति विशेषणत्वेऽपि न दोषः । अत्र विशेष्यशब्देन नाम्न एव विवक्षितत्वात् देवशब्दार्थं विनापि प्रयो-

१ फणींद्रस्ते गुणान्वक्तुं लिखितुं हैहयाधिपः । द्रष्टुमाखंडलः शक्तः काहमेष क ते गुणाः ॥ फणींद्र इत्यादिविशेषपदानि सहस्रवदनाद्यभिप्रायगर्भाणि ।

षष्ठी। पराभूतिः पराभवः उत्कृष्टसमृद्धिश्च प्रदीयते । अत्र पराभूतिशब्देऽर्थ-द्वयस्यैक्यारोपात् तुल्ययोगिता ॥ ४१ ॥ गुणेति ॥ गुणोत्कृष्टैः प्रसिद्धगुणैः समीकृत्य सदृशीकृत्य। वचः प्रस्तुतस्येति शेषः। अन्या तुल्ययोगिता। उदाह-

प्रदीयते पराभूतिर्मित्रशात्रवयोस्त्वया ॥ ४४ ॥
गुणोत्कृष्टैः समीकृत्य वचोऽन्यातुल्ययोगिता ॥

रणम्। यमो धर्मराजः पाशी वरुणः श्रीदः कुबेरः शक्रः इंद्रः भवांस्त्वमपि लोकपालः। लोकपालशब्दस्य प्रत्येकमन्वयः। तेन प्रकृतस्य राज्ञो यमादिसमीकरणं बोध्यम्। अत्र लोकपालत्वेन प्रकृताप्रकृतयोस्तुल्यत्वं वाच्यार्थः। प्रता-

---

१ पूर्वोदाहरणं स्तुतिपर्यवसायि इदं तु निंदापर्यवसायीति भेदः। इयं तुल्ययोगिता च सरस्वतीकंठाभरणोक्ता। एतस्या उदाहरणांतरं च यथा। यश्च निंबं परशुना यश्चैनं मधुसर्पिषा। यश्चैनं कटुमाल्याद्यैः सर्वस्य कटुरेव सः ॥ अत्र वृश्चति सिंचति अर्चतीत्यध्याहारैर्वाक्यानि पूरणीयानि।

एादिगुणोत्कर्षेण तुल्यत्वं तु व्यंग्यार्थ इति विशेषः। दीपके तु व्यंग्यार्थो नास्ति ॥ ४५ ॥ वदंतीति ॥ वर्ण्यावर्ण्यानां प्रकृताप्रकृतानां धर्मैक्यं धर्मसाम्यं

लोकपालो यमः पाशी श्रीदः शक्रो भवानपि ॥ ४५ ॥
वदंति वर्ण्यावर्ण्यानां धर्मैक्यं दीपकं बुधाः ॥

बुधाः दीपकं वदंति। दीपकं इति व्युत्पत्तेः। उदाहरणम्। कलभः करिशावः। कलभः करिशावक इत्यमरः। मदेन दानेन भाति महीपतिश्च प्रतापेन भाति

१ संगतानि मृगाक्षीणां तडिद्विलसितान्यपि। क्षणद्वयं न तिष्ठंति घनारब्धान्यपि स्वयम् ॥ इमां तुल्ययोगितां सिद्धिमिति केचिद्व्याजन्हुः यदाह । जयेदवः। सिद्धिः ख्यातेषु चेन्नाम कीर्त्यते तुल्यतोक्तये। युवामेवेह विख्यातौ त्वं बलैर्जलधिर्जलैः ॥

२ प्रस्तुताप्रस्तुतानामेकधर्मान्वयो दीपकम्। यथा कलभमहीपालयोः प्रस्तुताप्रस्तुतयोर्भानक्रियान्वयः । अत्रापि क्रियाविशेषणीभूतयोर्बिंबप्रतिबिंबाभावो बोध्यः।

शोभते । अत्र प्रकृताप्रकृतयोः शोभैकधर्मान्वयः ॥ ४६ ॥ त्रिविधामिति ॥ दीपकावृत्तौ देहलीदीपकन्यायेनानेकोपकारस्य पदस्यार्थस्योभयोर्वा आवृत्तौ

मंदेन भाति कलभः प्रतापेन महीपतिः ॥ ४६ ॥

त्रिविधं दीपकावृत्तौ भवेदावृत्तिदीपकम् ॥

पुनरभिधाने त्रिविधं त्रिप्रकारमावृत्तिदीपकं भवेत् । आवृत्तिप्रधानं दीपकमिति व्युत्पत्तेः । उदाहरणम् । इयमंबुदमाला मेघपंक्तिः वर्षति तोयं सिंचति

---

१ मणिः शाणोल्लीढः समरविजयी हेतिदलितो मदक्षीणो नागः शरदि सरितः श्यानपुलिनाः । कलाशेषश्चंद्रः सुरतमृदिता बालवनिता तनिम्ना शोभंते गलितविभवाश्चार्थिषु नृपाः ॥ अत्र प्रस्तुतानां नृपाणामवर्ण्यानां मण्यादीनां शोभैकधर्मान्वयः । पूर्वोदाहरण आदिदीपकमिह त्वंतदीपकमिति भेदः । सुवर्णपुष्पां पृथिवीं चिन्वंति पुरुषास्त्रयः । शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम् ॥ अत्र प्रस्तुतानां च युगपद्धर्मान्वयः ।

(१ हेतिभिरायुधैर्दलितो निहतः । २ श्यानानि शुष्काणि पुलिनानि जलनिर्मुक्ततटानि यासां ताः । ३ तनोः कृशस्य भावस्तनिमा कार्श्यं तेन । ४ गलितः संक्रांतो विभवः समृद्धिर्येषां ते ।)

एषा शर्वरी रात्रिश्च वर्षति वर्षमिवाचरति । यद्यप्यत्र प्रथमं वृषु सेचने इति धातोर्लटि रूपं द्वितीयं च वर्षशब्दस्याचारक्विबंतस्येति पदभेदस्तस्थापि स-

वर्षत्यंबुदमालेयं वर्षत्येषा च शर्वरी ॥ ४७ ॥
उन्मीलंति कदंबानि स्फुटंति कुटजा द्रुमाः ॥

मानत्वेनाभेदाध्यवसायात्पदावृत्तिः ॥ ४७ ॥ उन्मीलंतीति ॥ कदंबानि नीपकुसुमानि उन्मीलंति विकसंति । मील संश्लेषणे इति धातोरुपसर्गयोगादर्थ-

---

१ उत्कंठयति मेघानां माला वर्गं कलापिनाम् । यूनां चोत्कंठयत्यद्य मानसं मकरध्वजः ॥ उत्कंठयति मेघानां माला पंक्तिः कलापिनां मयूराणां वर्गं समूहं उत्कंठयति ऊर्ध्वं कंठो यस्य तादृशं करोति तथा मकरध्वजः कामः यूनां तरुणानां मानसमुत्कंठयत्युत्सुकं करोतीत्यर्थभेदेऽपि शाब्दवृत्तिः । २ शमयति जलधरधारा चातकयूनां तृषं चिरोपनताम् । क्षपयति च वधूलोचनजलधारा कामिनां प्रवासरुचिम् । वदनेन निर्जितं तव निहीयते चंद्रबिंबमंबुधरे । अरविंदमपि च सुंदरि निलीयते पाथसां पूरे ॥ एवं चावृत्तीनां प्रस्तुताप्रस्तुतोभयविषयत्वाभावेऽपि दीपकस्थापत्तिमात्रेण दीपकव्यपदेशः ।

भेदः । किं च । कुटजा द्रुमाः स्फुटंति विकसंति लक्षणया तत्पुष्पाणि गृह्यंते । अत्र क्रियापदद्वयस्यार्थमात्रा वृत्तिः । चातकाः सारंगाख्यपक्षिणः तृप्ताः संतः माद्यंति हृष्यंति । शिखावलाः शिखिनश्च । शिखास्ति येषामिति मत्वर्थीयो वलच्

माद्यंति चातकास्तृप्ता माद्यंति च शिखावलाः ॥ ४८ ॥

वाक्ययोरेकसामान्ये प्रतिवस्तूपमा मता ॥
तापेन भ्राजते सूरः शूरश्चापेन राजते ॥ ४९ ॥

प्रत्ययः । माद्यंति मदी हर्षे इति धातोर्लटि रूपद्वयमित्युभयावृत्तिः ॥४८॥ वाक्ययोरिति ॥ वाक्ययोः प्रकृताप्रकृतार्थयोः । [1]एकसामान्ये समान एव सामा-

---

१ तवामृतस्यदिनि पादपंकजे निवेशितात्मा कथमन्यदिच्छति । स्थितेऽरविंदे मकरंदनिर्भरे मधुव्रतो नेक्षुरसं हि वीक्षते ॥ अत्र यद्युपमेयवाक्येऽनिच्छा उपमानवाक्ये अवीक्षेति धर्मभेदः प्रतिभाति वीक्षणमात्रस्यावर्जनीयस्य प्रतिषेधानर्हत्वादिच्छापूर्वकवीक्षाप्रतिषेधोऽयमनिच्छापर्यवसित एवेति धर्मैक्यमनुसंधेयम् ।

न्यः एकश्चासौ सामान्यश्चेति कर्मधारयः । एकस्मिन्समानधर्मत्वे सतीत्यर्थः । प्रतिवस्तूपमा मता । प्रतिवस्तु प्रत्यर्थमुपमा यस्यामिति व्युत्पत्तेः । उदाहरणम् । सूरः सूर्यः तापेन दीप्त्या भ्राजते शोभते । शूरस्तु चापेन धनुषा राजते शोभते । अत्र केषांचिदलंकाराणां परस्परं भेदः कुवलयानंदे दर्शितः । संक्षेपेणोच्यते । तुल्ययोगितायां द्वावप्यर्थौ क्वचिद्वर्णनीयौ । दीपके त्वेको वर्ण्य

चेद्बिंबप्रतिबिंबत्वं दृष्टांतस्तदलंकृतिः ॥

इतरस्त्ववर्ण्यः । आवृत्तिदीपकं च वर्ण्यविषयमेव । प्रतिवस्तूपमा चोभयविषया । तत्र धर्मस्य द्विरुपादानं दीपके तु न तथेति ॥४९॥ चेदिति ॥ चेद्यदि वाक्यार्थयोरिति शेषः । बिंबप्रतिबिंबत्वमाकारप्रत्याकारतुल्यत्वं तत्तर्हि दृष्टांतो नामालंकृतिर्भवति । शब्दद्वयमजहल्लिंगम् । उदाहरणम् । हे राजन् अत्रेति शेषः । त्वमेव कीर्तिमान् यशस्वी त्वत्तुल्यो नान्य इत्यर्थः । तथा विधुरेव कांति-

मान् भूरिप्रभावः। विजातीयधर्मयोः साम्यं बिंबप्रतिबिंबभावः।सजातीयधर्मयोः साम्यं वस्तुप्रतिवस्तुभाव इति विवेकः ॥५०॥ वाक्येति ॥ सदृशयोस्तुल्ययोर्वाक्यार्थयोरनेकपदार्थयोः। सुप्तिङंतचयो वाक्यं क्रिया वा कारकान्वितेत्यमरः ।

त्वंमेव कीर्तिमान् राजन् विधुरेव हि कांतिमान् ॥ ५० ॥

वाक्यार्थयोः सदृशयोरैक्यारोपो निदर्शना ॥

यत्तद्वयामैक्यारोपः अभेदारोपः। निदर्शना निश्चित्य दर्शनं सादृश्यप्रकटनं निदर्शना। दृशेर्ण्यंतात् स्त्रियां भावे युच्। उदाहरणम्।या दातुःपुंसः सौम्यता सोम

१ देवीं वाचमुपासते हि बहवः सारं तु सारस्वतं जानीते नितरामसौ गुरुकुलक्लिष्टो मुरारिः कविः। अब्धिर्लंघित एव वानरभटैः किंत्वस्य गंभीरतामापातालनिमग्नपीवरतनुर्जानाति मंथाचलः ॥ कामं नृपाः संति सहस्रशोऽन्ये राजन्वतीमाहुरनेन भूमिम्। नक्षत्रताराग्रहसंकुलापि ज्योतिष्मती चंद्रमसैव भूमिः ॥ पूर्वोदाहरणे कीर्तिकांत्योर्बिंबप्रतिबिंबभावप्रयोजकं मनोहारित्वरूपं सादृश्यमार्थमिह तु राजज्योतिषोः प्राशस्त्यरूपं तच्छाब्दमिति भेदः।

इव सोमः स एव सौम्यः तस्य भावः सौम्यता अक्रूरता सेयं पूर्णेंदोः पूर्णचंद्रस्य अकलंकता निष्कलंकता । इह यत्तच्छब्दाभ्यामैक्यारोपः स्पष्टः । यदिति पाठे शक्यं मांसैः क्षुदपनेतुमितिवत् सामान्ये नपुंसकत्वम् ॥ ५१ ॥ पदार्थेति ॥

या दातुः सौम्यता सेयं पूर्णेंदोरकलंकता ॥ ५१ ॥

पदार्थवृत्तिमप्येके वदंत्यन्यां निदर्शनाम् ॥

एके केचित् पदार्थवृत्तिमपि । पदार्थे वृत्तिरैक्यारोपस्थितिर्यस्यां तादृशीमपि अन्यां निदर्शनां वदंति । उदाहरणम् । हे प्रिये त्वन्नेत्रयुगलं नीलांबुजन्मनोरिं-

---

१ योऽभीतो वसतो नाथ भवतः समुपागमः । मदीयभवने सोऽयमिंदोरमृतनिर्झरः ॥ अरण्यरुदितं कृतं शवशरीरमुद्वर्तितं स्थलेऽब्जमवरोपितं सुचिरमूषरे वर्षितम् । श्वपुच्छमवनामितं बधिरकर्णजापः कृतो धृतोऽधमुखदर्पणो यदबुधो जनः सेवितः ॥ अत्राबुधजनसेवाया अरण्यरोदनादीनां यत्तद्भ्यामैक्यारोपः ॥ २ दातृपुरुषसौम्यत्वस्योपमेयवाक्यार्थस्य पूर्णेंदोरकलंकत्वस्योपमानवाक्यार्थस्य यत्तद्भ्यामैक्यारोपः ॥ ३ वियोगे गौडनारीणां यो गंडतलपांडिमा ॥ अदृश्यत स खर्जूरीमंजरीगर्भरेणुषु ॥ पूर्वस्मिन्नुदाहरण उपमेय उपमानधर्मारोपः । इह तूपमान उपमेयधर्मारोप इति भेदः ॥

श्रयः। विषयिरूपेण विषयस्वीकारादित्यर्थः। रूपकातिशयोक्तिभेदात् रूपकयुक्ताऽतिशयोक्तिरिति मध्यमपदलोपः। उदाहरणम्। नीलोत्पलद्वंद्वात् नेत्रयुगलात् शिताः तीक्ष्णाः शराः कटाक्षाः निःसरंति। हे मित्र त्वं पश्य। अत्र नीलो-

यद्यपन्हुतिगर्भत्वं सैव सापन्हवा मता ॥
त्वत्सूक्तिषु सुधा राजन् भ्रांताः पश्यंति तां विधौ ॥ ३५ ॥

त्पलद्वंद्वशब्देन नेत्रयुगले शरशब्देन कटाक्षेषु च गौणी लक्षणा बोध्या। विशेषस्तु मत्कृते कोविदानंदे द्रष्टव्यः ॥३४॥ यदीति ॥ यदि अपह्नुतिगर्भत्वं स्यादिति शेषः। तर्हि सापन्हवा सैव रूपकातिशयोक्तिर्मता बुधैरिति शेषः। उदाहर-

१ रवितप्तो गजः पद्मान्तद्रूह्यान्बाधितुं ध्रुवम्। सरो विशति न स्नातुं गजस्नानं हि निष्फलम् ॥ अत्र गजस्य सरःप्रवेशंप्रति फले स्नाने फलत्वमपन्हुत्य पद्मबाधने निवेशितम्।

णम् । हे राजन् त्वत्सूक्तिषु सुधा मधुरतारूपास्ति। भ्रांतास्तां विधौ चंद्रे पश्यंति। अत्र सुधाशब्देन मधुरतायां लक्षणा बोध्या। तस्याश्चंद्रेऽपन्हवोऽर्थसिद्धिः ॥३५॥ भेदकेति ॥ तस्य प्रकृतस्यैव अन्यत्ववर्णनं अन्यतया कथनं तु भेदकातिशयोक्तिः। भेदकस्य लोकोत्तरत्वस्यातिशयकथनात्। उदाहरणम्। अस्य महीपतेः

भेदकातिशयोक्तिस्तु तस्यैवान्यत्ववर्णनम् ॥
[1]अन्यदेवास्य गांभीर्यमन्यद्धैर्यं महीपतेः ॥ ३६ ॥
संबंधातिशयोक्तिः स्यादयोगे योगकल्पनम् ॥

गांभीर्यमन्यदेव लोकोत्तरमेव धैर्यं चान्यदेव ॥३६॥ संबंधेति ॥ अयोगे असंबंधे योगकल्पनं संबंधातिशयोक्तिः स्यात्। उदाहरम्। अस्य पुरस्य नगरस्य सौधाग्राणि सौधानां राजगृहाणाम्। सौधोऽस्त्री राजसदनमित्यमरः। अग्राणि

१ अन्येयं रूपसंपत्तिरन्या वैदग्ध्यधोरणी। नैषा नलिनपत्राक्षी सृष्टिः साधारणी विधेः। ( १ चातुर्यम्। २ परिपाटी। )

शिरोभागाः विधुमंडलं चंद्रबिंबं स्पृशंति ॥३७॥ योग इति ॥ योगेऽपि संबंधेऽपि अयोगः असंबंधकथनमपि संबंधातिशयोक्तिरितीर्यते कथ्यते। उदाहरणम् ।

सौधाग्राणि पुरस्यास्य स्पृशंति विधुमंडलम् ॥ ३७ ॥
योगेऽप्ययोगः संबंधातिशयोक्तिरितीर्यते ॥
त्वयि[2] दातरि राजेंद्र स्वर्द्रुमान्नाद्रियामहे ॥ ३८ ॥

हे राजेंद्र राजन् त्वयि दातरि सति स्वर्द्रुमान् कल्पवृक्षान्नाद्रियामहे न गणयामः । अत्र कल्पवृक्षादरसंभवेऽपि निःस्पृहत्वद्योतनायानादरोक्तिः ॥ ३८ ॥

---

१ कतिपयदिवसैः क्षयं प्रायायात्कनकगिरिः कृतवासरावसानः । इति मुदमुपयाति चक्रवाकी वितरणशालिनि वीररुद्रदेवे ॥ अत्र चक्रवाक्याः सूर्यास्तमयकारकमहामेरुक्षयसंभावनाप्रयुक्तसंतोषात्संबंधो वर्णितः । २ अनयोरनवद्यांगि स्तनयोर्जृंभमाणयोः । अवकाशो न पर्याप्तस्तव बाहुलतांतरे ॥ (१ वर्धमानयोः ।)

अक्रमेति ॥ हेतुकार्ययोर्जनकजन्ययोः सहत्वे सहभावे अक्रमातिशयोक्तिः स्यात्। सहभावाभिधानेन क्रमरहितत्वात्। उदाहरणम्। हे देव राजन्। देवः सूरे घने राज्ञीत्यमरः। ते शराः बाणाः चपरं पराः शत्रवः। परोऽरिपरमात्मनोरि-

अक्रमातिशयोक्तिः स्यात्सहत्वे हेतुकार्ययोः ॥
आलिंगंति समं देव ज्यां शराश्च पराश्च ते ॥ ३९ ॥

ति विश्वः। समं सहैव। साकं सार्धं समं सहेत्यमरः। ज्यां मौर्वीं भूमिं च। मौर्वी ज्या सिंजिनी गुण इत्यमरः। ज्या कुर्वसुमती महीति चामरः। आलिंगंति स्पृशं-

१ मुंचति मुंचति कोशं भजति च भजति प्रकंपमरिवर्गः। हम्मीरवीरखड्गे त्यजति त्यजति क्षमामाशु ॥ खड्गे कोशं पिधानं मुंचति सति अरिसमूहोऽपि कोशं भांडारं मुंचति। तथा खड्गे प्रकंपमुल्लासनं भजति सति सः प्रकृष्टं कंपं भजति। एवं खड्गे क्षमां शांतिं त्यजति सति सोऽपि क्षमां पृथ्वीं त्यजतीत्यर्थः। अत्र खड्गस्य कोशत्यागादिकाले एव रिपूणां धनत्यागादि वर्णितम्।

ति शरसंधानकाले शत्रवः पतंतीत्यर्थः ॥ ३९ ॥ चपलेति ॥ कार्ये जन्यवस्तुनि हेतुप्रसक्तिजे कारणप्रसंगजाते सति । चपलातिशयोक्तिः स्यात् कारणप्रसंगमात्रेण कार्योत्पत्तिवर्णनाच्चपलत्वम् । उदाहरणम् । तन्व्याः कामिन्याः ऊर्मिका अं-

चपलातिशयोक्तिस्तु कार्ये हेतुप्रसक्तिजे ॥
यास्यामीत्युदिते तन्व्या वलयोभवदूर्मिका ॥ ४० ॥
अत्यंतातिशयोक्तिस्तत्पौर्वापर्यव्यतिक्रमे ॥

गुलीभूषणं प्रियेण यास्यामीत्युदिते वलयः कंकणरूपमभवत् । करस्यातिकृशतोत्पत्तावंगुलीभूषणं कंकणस्थानीयतां गतमित्यर्थः ॥ ४० ॥ अत्यंतेति ॥ तत्पौर्वापर्यव्यतिक्रमे तयोः पौर्वापर्यव्यतिक्रमे कार्यस्य पूर्वत्वे कारणस्य चाप-

१ यामि न यामीति धवे वदति पुरस्तात्क्षणेन तन्वंग्याः । गलितानि पुरोवलयान्यपराणि तथैव दलितानि ॥

रत्वे सतीत्यर्थः। अत्यंतातिशयोक्तिः असंभाव्यत्वाद्दत्यंतत्वम् । असंभाव्यवर्णनमपि शीघ्रतातिशयद्योतनाच्चमत्कारहेतुः । उदाहरणम् । अग्रे आदौ अग्रमाद्ये वने प्राप्य इति विश्वः । मानः कोपः गतः । स्त्रीणामीर्ष्याकृतः कोपो

अग्रे मानो गतः पश्चादनुनीता प्रियेण सा ॥ ४१ ॥

वर्ण्यानामितरेषां वा धर्मैक्यं तुल्ययोगिता ॥

मानोऽन्यासंगिनि प्रिय इति लक्षणात् । ततः सा मानिनी प्रियेण पश्चादनुनीता सांत्विता ॥ ४१ ॥ वर्ण्यानामिति ॥ वर्ण्यानां प्रकृतानां इतरेषामप्रस्तुतानां धर्मैक्यं एकधर्मान्वयः । तुल्ययोगिता तुल्यायोगितान्वयो यत्रेति

१ कवींद्राणामासन्प्रथमतरमेवांगणभुवश्चलद्भृंगासंगा कुलकरिमदामोदमधुराः । अमी पश्चात्तेषामुपरि पतिता रुद्रनृपतेः कटाक्षाः क्षीरोदप्रसरदुरुवीचीसहचराः ॥

व्युत्पत्तेः । उदाहरणम् । सरोजानि च परं स्वैरिणीवदनानि जारस्त्रीमुखानि संकुचंति निमीलंति । चंद्रोदये इति शेषः । अत्र प्रस्तुतानां संकोचक्रियारू-

संकुचंति सरोजानि स्वैरिणीवदनानि च ॥ ४२ ॥
त्वदंगमार्दवे दृष्टे कस्य चित्ते न भासते ॥

पैकधर्मान्वयः ॥ ४२ ॥ त्वदंगेति ॥ हे प्रिये त्वदंगमार्दवे त्वद्देहसौकुमार्ये दृष्टे

---

१ नांबुजैर्न कमलैरुपमेयं स्वैरिणीजनविलोचनयुग्मम् । नोदये दिनकरस्य न चेंदोः केवले तमसि यस्य विकाशः ॥ अस्तं याते दिवानाथे निशानाथे महोदयम् । उन्मीलंति कुमुद्वंति चकोरीनयनानि च ॥ इति काव्यविलासे । तथा । संजातपत्रप्रकारान्वितानि समुद्वहंति स्फुटपाटलत्वम् । विकस्वराण्यर्ककराभिमर्शाद्दिनानि पद्मानि च वृद्धिमीयुः ॥ संजातैः पत्राणां प्रकरैः समूहैरन्वितानि स्फुटा विकसिताः पाटला वृक्षविशेषा येषु तानि तेषां भावस्तत्त्वं समुद्वहंतीति शत्रंतं दधानानीत्यर्थः । पद्मपक्षे तु स्फुटानि विकसितानि च तानि पाटलानि पाटलवर्णानि तेषां भावस्तत्त्वमित्यादि पूर्ववत् । एवमर्कस्य करैः किरणैरभिमर्शनाद्विकस्वराणि भासुराणि दिनानि पद्मानि तु विकासशालीनि इत्यर्थः । अत्र ग्रीष्मवर्णनेन तदीयत्वेन प्रस्तुतानां दिनानां पद्मानां चैकक्रियान्वयः । *( १ विकसनशीलानि । )



सति कस्य चित्ते मालतीशशभृल्लेखाकदलीनां जातिपुष्पचंद्रकलारंभानां कठोरता न भासते कठिनता न भासते। सर्वस्य चित्ते भासत इत्यर्थः। अत्राप्रस्तुतानामुपमानभूतानां काठिन्यगुणरूपैकधर्मान्वयः ॥४३॥ हितेति ॥ हिताहिते

मालतीशशभृल्लेखाकदलीनां कठोरता ॥ ४३ ॥

हिताहिते वृत्तितौल्यमपरा तुल्ययोगिता ॥

हितं चाहितं च हिताहितं तस्मिन्सर्वोऽपि द्वंद्वो विभाषयैकवद्भवतीत्येकवद्भावः। वृत्तितौल्यं वृत्तेर्व्यवहारस्य तौल्यं तुल्यत्वम्। युवादित्वादण् प्रत्ययः। अपराऽन्या तुल्ययोगिता। उदाहरणम्। हे राजन् त्वया मित्रशात्रवयोः हिताहितयोः शत्रुरेव शात्रवमित्यत्र प्रज्ञादित्वादण् प्रत्ययः। संप्रदानसंज्ञाभावात्

१ नागेंद्रहस्तास्त्वचि कर्कशत्वादेकांतशैत्यात्कदलीविशेषाः। लब्ध्वापि लोके परिणाहि रूपं जातास्तदूर्वोरुपमानबाह्याः॥ ऊरुवर्णनेनाप्रस्तुतानां करिकराणां कदलीनां चैकगुणान्वयः। (१ विशालतारूपम्।)

ज्वरः किमिति पृष्टे हे सखि ज्वरो न किंतु स्मर इति सत्यमुत्तरं ज्वरत्वस्य निन्हवो भ्रांतिवारणार्थः ॥२७॥ कैतवेति ॥ व्याजाद्यैः पदैर्निन्हुतेर्व्यक्तौ सत्यां

तापं करोति सोत्कंपं ज्वरः किं न सखि स्मरः ॥ २७ ॥

कैतवापन्हुतिर्व्यक्तौ व्याजाद्यैर्निन्हुतैः पदैः ॥

कैतवापन्हुतिः। उदाहरणम्। कांताद्दक्पातकैतवात् कामिनीकटाक्षमिषात् स्मर-

---

१ व्याज्याद्यैरिति पदोपादानेन मिषकपटछलछद्मकैतवादयो गृह्यंते। २ अत्र तापं करोतीति स्मरवृत्तांते कथिते तस्य ज्वरसाधारण्याद्दजुबुद्ध्या सख्या ज्वरः किमिति पृष्टे न सखि इति तत्त्वोक्त्या भ्रांतिवारणं कृतम्। यथा वा। नागरिक समधिकोन्नतिरिह महिषः कोऽयमुभयतःपुच्छः। नहि नहि करिकलभोऽयं शुडादंडोऽयमस्य न तु पुच्छः॥ पूर्वोदाहरणे संदेहरूपभ्रांतितिषयज्वरत्वापन्हवः। ज्वरः किमिति प्रश्नेन तद्विषयसंदेहावगमात्। इह तु महिषत्वनिश्चयरूपभ्रांतिविषयस्य महिषत्वस्येति ततो भेदः। जटा नेयं वेणीकृतकचकलापो न गरलं गले कस्तूरीयं शिरसि शशिरेखा न कुसुमम्। इयं भूतिर्नांगे प्रियविरहजन्मा धवलिमा पुरारातिभ्रांत्या कुसुमशर किं मां प्रहरसि॥ दंडी त्वत्र तत्त्वाख्यानोपमेत्युपमाभेदं मेने। यदाह। न पद्मं मुखमेवेदं न भृंगौ चक्षुषी इमे। इति विस्पष्टसादृश्यात्तत्त्वाख्यानोपमा मता इति॥ अत्र कल्पितभ्रांतिर्जटा नेयमित्यादिनिषेधमात्रोन्नेया पूर्ववत्प्रश्नाभावात्। (१ निषेधस्य प्रसक्तिपूर्वकत्वादिति भावः।)

नाराचाः कामबाणाः निर्यांति कटाक्षत्वं मिषमात्रं कामबाणत्वं तु सत्यमित्यपन्हवः ॥२८॥ छेकेति ॥ अन्यस्य शंकातः शंकायां सत्याम्। सप्तम्यास्तसिल्। तथ्य-

निर्यांत्ति स्मरनाराचाः कांतादृक्पातकैतवात् ॥ २८ ॥
छेकापन्हुतिरन्यस्य शंकातस्तथ्यनिन्हवे ॥
[1]प्रजल्पन्मत्पदे लग्नः कांतः किं न हि नूपुरः ॥ २९ ॥

निन्हवे सति छेकापन्हुतिः छेकस्य चतुरस्यापन्हुतिः। उदाहणम्। प्रजल्पन्सन्

१ रिक्तेषु वारिकथया विपिनोदरेषु मध्यान्हजृंभितमहातपतापतप्ताः। स्कंधांतरोत्थितदवाग्निशिखाछलेन जिव्हां प्रसार्य तरवो जलमर्थयंते। २ सीत्कारं शिक्षयति व्रणयत्यधरं तनोति रोमांचम्। नागरिकः किं मिलितो नहि नहि सखि हैमनः पवनः ॥ प्रजल्पन्नित्युदाहरणे एकस्य वाक्यस्यान्यथा योजनमिह त्वनेकेषामिति भेदः। पद्मे त्वन्नयने स्मरामि सततं भावो भवत्कुंतले नीले मुह्यति किं करोमि महितैः क्रीतोऽस्मि ते विभ्रमैः। इत्युत्स्वप्नवचो निशम्य सरुषा निर्भर्त्सितो राधया कृष्णस्तत्परमेव तद्व्यपदिशन्क्रीडाविटः पातु वः ॥ वदंती जारवृत्तांतं पत्यौ धूर्ता सखीधिया। पतिं बुध्वा सखि ततः प्रबुद्धास्मीत्यपूरयत्। (१ केशपाशे। २ स्वकामुकवार्ताम्। ३ काचित्कामिनी। ४ सखीभ्रमेण। ५ ततः उक्तवृत्तांतानंतरं प्रबुद्धा जागरणवती। ६ परितवती।)

मत्पद लग्न इति नायिकाया उक्तौ कांतः किमिति सख्याः प्रश्नः। कांतो नहि नैव किंतु नूपुरो मंजीरः। मंजीरो नूपुरोऽस्त्रियामित्यमरः। यद्यपि जल्पधातुर्व्यक्तायां वाचि प्रवर्तते तथापि धातूनामनेकार्थत्वादुपसर्गयोगाद्वा प्रजल्पन्निति नूपुरविशेषः ॥ २९ ॥ संभावनेति ॥ वस्तुहेतुफलात्मना वस्तुहेतुफलस्वरू-

संभावना स्यादुत्प्रेक्षा वस्तुहेतुफलात्मना ॥
उक्तानुक्तास्पदाद्यात्र सिद्धासिद्धास्पदे परे ॥ ३० ॥

पेण तदन्येषामिति शेषः। संभावना उत्प्रेक्षा स्यात्। उत् उर्ध्वं गता प्रेक्षा दृष्टिः प्रज्ञा वा यस्यां सेति व्युत्पत्तेः। वितर्कं कुर्वतो दृष्टिर्हि तथा प्रसिद्धा। वर्णनीयस्य वस्तुनः तदन्यवस्तुस्वरूपेण वितर्कः वस्तूत्प्रेक्षा स्वरूपोत्प्रेक्षा चोच्यते। प्रकृतस्याहेतोर्हेतुत्वेनाफलस्य फलत्वेन च कल्पना क्रमेण हेतूत्प्रेक्षा फलोत्प्रेक्षा

चोच्येते। हेतूत्प्रेक्षायां तृतीयांतात्पंचम्यंताद्वा पर इवादिशब्दः। फलोत्प्रेक्षायां चतुर्थ्यंतात्तुमंताद्वा पर इवादिरिति प्रायेण भेदः। इवादिस्तु इव नूनं किं प्रायः ध्रुवं असंशयं किमु वा न ननु खलु स्वित् आहोस्वित् उत उताहो शंके वेद सत्यं क्रियापदं च वितर्कार्थमिति। एषामध्याहारे गम्योत्प्रेक्षा। अध्याहृतपदस्यापि यूष्मद्युपपदे इत्यादिज्ञापकादन्वयो युक्तः। तद्भेदानाह। अत्राद्या वस्तूत्प्रेक्षा उक्तानु

धूमस्तोमं तमः शंके कोकीविरहशुष्मणाम् ॥

क्तास्पदा उक्तविषयाऽनुक्तविषया चेति द्विविधेत्यर्थः। परे द्वे सिद्धासिद्धास्पदे सिद्धविषये असिद्धविषये चेति प्रत्येकं द्विविधे। साधारणधर्मद्योतनं च संभावनामूलम् ॥ ३० ॥ उदाहरणम् ॥ धूमेति ॥ तमो ध्वांतं कोकीविरहशुष्मणां चक्रवाकीविरहाग्नीनाम्। चक्रवाके वृके कोक इति वैजयंती। बर्हिः शुष्मा कृष्णवर्त्मेत्यमरः। धूमस्तोमं धूमपटलं शंके। अत्र तमोविषयः धूमस्तोमो विषयीत्युक्तास्पदा।

तमः अंगानि लिंपतीव व्याप्नोतीति शेषः । अत्र तमोव्यापनमध्याहृतविषयः । अंगलेपनं विषयीत्यनुक्तास्पदा । श्लोकपूरणार्थं पुनरप्युदाहरणमाह । नभ

लिंपतीव तमोऽगानि वर्षतीवांजनं नभः ॥ ३१ ॥

आकाशं अंजनं कज्जलं वर्षतीव तमो व्याप्नोतीति शेषः । ततोऽनुक्तास्पदेयम् । प्रथमोदाहरणे पदार्थोत्प्रेक्षा द्वितीयोदाहरणे वाक्यार्थोत्प्रेक्षेति भेद इत्येके॥३१॥

---

१ बालेंदुवक्राण्यविकासभावाद्बभुः पलाशान्यतिलोहितानि । सद्यो वसंतेन समागतानां नखक्षतानीव वनस्थलीनाम् ॥ अत्र पलाशमुकुलानां वक्रत्वलौहित्यसंबंधेन निमित्तेन वसंतनायकसमागतवनस्थलीसंबंधि सद्यःकृतनखक्षततादात्म्यं संभावना उक्तविषया स्वरूपोत्प्रेक्षा । पूर्वोदाहरणे निमित्तभूतधर्मसंबंधो गम्यः । इह तूपात्त इति भेदः । न चेवशब्दस्य सादृश्यपरत्वेन प्रसिद्धतरत्वादुपमैवास्तु लिंपतीवेत्युदाहरणे लेपनकर्तुरुपमानत्वार्हस्य क्रियोपसर्जनत्ववदिह नखक्षतानामन्योपसर्जनत्वस्योपमाबाधकस्याभावात् । पिनष्टीव तरंगाग्रैः समुद्रः फेनचंदनम् । तदादाय करैरिंदुर्लिंपतीव दिगंगनाः ॥ अत्र तरंगाग्रैः फेनचंदनस्य प्रेरणं पेषणतयोत्प्रेक्षते । समुद्रादुत्थितस्य चंद्रस्य प्रथमं समुद्रपूरे प्रसृतानां कराणां दिक्षु व्यापनं च समुद्रोपात्तफेनचंदनकृततल्लेपत्वेनोत्प्रेक्षते ।

रक्ताविति ॥ हे प्रिये तव मृदुलौ कोमलावंघ्री चरणौ । पदंघ्रिश्चरणोऽस्त्रिया-मित्यमरः । भुवि विक्षेपणाद्ध्रुवमारोपणात्किं रक्तौ स्त इति शेषः । सहजरक्त-

रक्तौ तवांघ्री मृदुलौ भुवि विक्षेपणाद्ध्रुवम् ॥
त्वन्मुखाभेच्छया नूनं पद्मैर्वैरायते शशी ॥ ३२ ॥

त्वेनाहेतोरपि विक्षेपणस्य हेतुत्वं कल्पितं विक्षेपणं च प्रत्यक्षसिद्धमिति सिद्ध-विषया हेतूत्प्रेक्षा । अत्र हेतुत्वाभावोपेतं विक्षेपणं विषयः । हेतुत्वरूपो धर्मो

---

१ रात्रौ रवेर्दिवा चेंदोरभावादिव स प्रभुः । भूमौ प्रतापयशसी सृष्टवान्सततोदिते ॥ रात्रौ रवेर्दिवा चंद्रस्याभावः सन्नपि प्रतापयशःसर्गे न हेतुरिति तस्य तद्धेतुत्वसंभावना सिद्धविषयाहेतूत्प्रेक्षा । रक्ताववित्युदाहरणे भावरूपो हेतुरिह त्वभावरूप इति भेदः । विवस्वतानायिषतेव मिश्राः स्वगोसहस्रेण समं जनानाम् । गावोऽपि नेत्रापरनामधेयास्तेनेदमांध्यं खलु नांधकारैः ॥ अत्र विवस्वता कृतं किरणैः सह जनलोचनानां नयनमसदेव रात्रावांध्यं प्रति हेतुत्वेनोत्प्रेक्ष्यत इत्यसिद्धविषया हेतूत्प्रेक्षा । यथा गोपालेन परकीयाभिर्गोभिर्मिश्राः स्वीया गावो नीयंते । तथा गोपदवाच्यत्वसाजात्येन मिश्रिता विवस्वतापि नीता इवेत्यर्थः । खलु संभावनायाम् । तेन नयनेन हेतुना इदमांध्यं न त्वंधकारैरित्यन्वयः । अत्र चानायिषतेवेति विषयोत्प्रेक्षण-पूर्वकं तस्य हेतुत्वेनोत्प्रेक्षणमिति पूर्वस्माद्भेदः । एवं पूर्वत्र इच्छयेति गुणरूपो हेतुस्तु क्रियारूप इत्यपि द्रष्टव्यम् ।

विषया बाध्यः। किं च शशी त्वन्मुखाभेच्छया त्वन्मुखकांतिलिप्सया नूनं पद्मैः सह वैरायते वैरं करोति । अत्र चंद्रस्य कामिनीमुखकांतिलिप्सा नास्तीत्यसिद्धविषया हेतूत्प्रेक्षा । इयं कारणोत्प्रेक्षेति वदंति । हेतुर्ना कारणं बीजमित्यमरोक्तेः। अत्र हेतुत्वाभावविशिष्टा कांतिलिप्सा विषयः। हेतुत्वरूपो धर्मश्च विषयी ॥ ३२ ॥ मध्य इति ॥ मध्यः कामिनीमध्यभागः कुचयोर्धृत्यै किं कनककदामभिः

मध्यः किं कुचयोर्धृत्यै बद्धः कनकदामभिः ॥
प्रायोऽब्जंत्वत्पदेनैक्यं प्राप्तुं तोये तपस्यति ॥ ३३ ॥

१ पूरं विधुर्वर्धयितुं पयोधेः शंकेयमेणांकमणि कियंति । पयांसि दोग्धि प्रियविप्रयोगे सशोककोकीनयने कियंति ॥ अत्र चंद्रेण कृतं समुद्रस्य बृंहणं सदेव तदा तेन कृतस्य चंद्रकांतद्रावणस्य कोकांगनाबाष्पस्रावणस्य च फलत्वेनोत्प्रेक्षेति सिद्धविषया फलोत्प्रेक्षा । २ रथस्थितानां परिवर्तनाय पुरातनानामिव वाहनानाम् । उत्पत्तिभूमौ तुरगोत्तमानां दिशि प्रतस्थे रविरुत्तरस्याम् ॥ रथस्थितानामिति । रवी रथे स्थितानां नियुक्तानां पुरातनानां वाहनानां अश्वानां परिवर्तनायेव तुरगोत्तमानां उत्पत्तिभूमावुत्तरस्यां दिशि प्रतस्थ इत्यन्वयः । अत्रोत्तरायणस्याश्वपरिवर्तनफलमसदेव फलत्वेनोत्प्रेक्षत इत्यसिद्धविषया फलोत्प्रेक्षा। प्रायोऽब्जमित्यत्र कोमलत्वस्य गुणस्य फलत्वेनोत्प्रेक्षणमिह तु परिवर्तनक्रियाया इति ततो भेदः ।

त्रिवलिरूपैः बद्धोऽस्ति । अत्र अत्यक्षसिद्धायाः कुचधृतेः फलत्वेन कल्पनासिद्ध-
विषया फलोत्प्रेक्षा । अत्र फलत्वाभाववती कुचधृतिर्विषयः । फलत्वरूपो धर्मो
विषयी । अब्जं पद्मं त्वत्पदेन सह ऐक्यं प्राप्तुं प्रायः । अत्रापि रूपकातिशयोक्तिः ।
तोये जले तपस्यति तपश्चरति । अत्र पद्मस्य प्रियापदसायुज्येच्छा नास्तीत्यसि-

रूपकातिशयोक्तिः स्यान्निगीर्याध्यवसानतः ॥
पश्य नीलोत्पलद्वंद्वान्निःसरंति शिताः शराः ॥ ३४ ॥

द्धविषया फलोत्प्रेक्षा । इमां कार्योत्प्रेक्षामाहुः । कार्यं फलं तथा व्युष्टिरिति को-
शात् । उपमा दूरगस्यापि न तु संभावना तथा । रूपके निश्चितारोप उत्प्रेक्षायां
त्वनिश्चितः ॥ ३३ ॥ रूपकेति ॥ निगीर्य विषयमिति शेषः । विषयमनिबध्येत्य-

१ वापी कापि स्फुरति गगने तत्परं सूक्ष्मपद्या सोपानालीमधिगतवती कांचनीमैंद्रनीली । अग्रे शैलौ सुकृतिसुगमौ चंदनच्छन्नदेशौ तत्रत्यानां सुलभममृतं संनिधानात्सुधांशोः । ( १ नाभी । २ केशालिः । ३ स्तनौ । )

ति न्यायेन कारणमालत्यामवतानम् ॥ १०३ ॥ गृहीतेति । [illegible]तमुक्तरीत्या आदौ गृहीतं पश्चान्मुक्तमिति गृहीतमुक्तं तस्य रीत्या निबंधनप्रकारेण । यद्वा । गृहीतं मुक्तं यस्यां सा गृहीतमुक्ता सा चासौ रीतिश्चेति तथेति विग्रहः । अर्थश्रेणिः

गृहीतमुक्तरीत्यार्थश्रेणिरेकावली मता ॥
नेत्रे कर्णांतविश्रांते कर्णौ दोस्तंभदोलितौ ॥ १०४ ॥

अर्थपंक्तिः एकावली मता । एकावली हारविशेषः । तत्सदृशत्वात् । उदाहरणम् । तस्य महीभुज इत्युत्तरश्लोकादपकृष्यते । नेत्रे कर्णांतविश्रांते कर्णपर्यंतमायते कर्णौ च दोस्तंभदोलितौ भुजस्तंभलंबिनौ । भुजबाहू प्रवेष्टो दोरित्यमरः १०४

१ नेत्र इति । तस्य भूभुज इति सर्वत्र संबध्यते । दोःस्तंभयोर्भुजस्तंभयोर्दोलितमांदोलनं ययोस्तौ । दोलनाविति पाठे दोला दोलनं ययोरस्तीति विग्रहः । मधूनि पद्मे पिबति द्विरेफः पद्मं विभाति श्रवणे प्रियायाः । स्पृशत्यमुष्याः श्रवणं च नेत्रं निर्यांति नेत्राच्छरवत्कटाक्षाः ॥ इति काव्यविलासे । उत्तरोत्तरस्य पूर्वपूर्वविशेषणभावः । पूर्वपूर्वस्योत्तरोत्तरविशेषणभावो वा गृहीतमुक्तरीतिः ।

दोस्तंभाविति ॥ दोस्तंभौ जानुपर्यंतप्रलंबनमनोहरौ । जानुनी च रत्नमुकुराकारे रत्नदर्पणतुल्ये । मुकुरो मणिभेदे स्यान्मल्लिकायां च दर्पण इति केशवः । अत्र पूर्वपदानां विशेष्यत्वमुत्तरपदानां च विशेषणत्वमिति संप्रदायः। प्रकारांतरं

दोर्स्तंभौ जानुपर्यंतप्रलंबनमनोहरौ ॥
जानुनी रत्नमुकुराकारे तस्य महीभुजः ॥ १०५ ॥
दीपकैकावलीयोगान्मालादीपकमुच्यते ॥

च कुवलयानंदे द्रष्टव्यम् । अत्र केषांचित्पदानां पुनरुक्तत्वेऽपि दोषो नाशंक्यः । सकलकविसंमतत्वाच्चमत्कारित्वाच्च । एवमावृत्तिदीपकेऽपि बोध्यम् ॥ १०५ ॥ दीपकेति ॥ दीपकैकावलीयोगात् दीप इव दीपकम् । अनेकोपकारकपदं तस्य

१ न तज्जलं यत्र सुचारु पंकजं न पंकजं तद्यदलीनषट्पदम् । न षट्पदोऽसौ कलकूजितो न यो न गुंजितं तन्न जहार यन्मनः ॥ अद्य श्रयति पुण्येन विवेकं मतिरुद्धता । विवेकस्तु ममात्मानमात्मा हरिपदद्वयम् इति काव्यविलासे ।

चक्रावल्याश्च योगाद्धतामालादीपकं नामोच्यते।मालया एकावल्या युक्तं दीपक-मिति व्युत्पत्तेः। स्मरेण तस्याः कामिन्याः हृदये स्थितिः कृता। तेन च कामिनी-मनसा त्वयि स्थितिः कृता। अत्र स्थितिपदस्यावृत्तेर्दीपकत्वं हृदयशब्दस्य गृही-

स्मरेण हृदये तस्यास्तेन त्वयि कृता स्थितिः ॥ १०६ ॥
उत्तरोत्तरमुत्कर्षः सार इत्यभिधीयते ॥

तमुक्तत्वादेकावली चेत्युभयोर्योगः॥१०६॥ उत्तरोत्तरमिति॥ उत्तरोत्तरं यथोत्तरमुत्कर्षः सार इत्यभिधीयते कथ्यते। उदाहरणम्। मधु क्षौद्रं मधुरं स्वादु

१ संग्रामांगणमागतेन भवता चापे समारोपिते देवाकर्णय येन येन सहसा यद्यत्समासादितम्। कोदंडेन शराः शरैररिशिरस्तेनापि भूमंडलं तेन त्वं भवता च कीर्तिरतुला कीर्त्या च लोकत्रयम्॥ संग्रामेति। कोदण्डेन धनुषा शराः समासादिताः शरैः शत्रुमस्तकं तेन शत्रुमस्तकेनापि भूमंडलं भूमंडलेन त्वं पालकः समासादितः भवता कीर्तिरासादिता कीर्त्या च लोकत्रयं समासादितमित्यनुषंगेणान्वयः।

तस्माच्च पीयूषममृतं मधुरं तस्मात् कवेर्वचो मधुरम्। पंचमी विभक्ते इति पंचमी

मधुरं मधु पीयूषं तस्मात्तस्मात्कवेर्वचः ॥ १०७ ॥

यथासंख्यं क्रमेणैव क्रमिकाणां समन्वयः ॥

॥ १०७ ॥ यथासंख्यमिति ॥ क्रमिकाणां क्रमप्राप्तानां क्रमेणैव समन्वयो

---

१ सारा लोकेषु विद्वांसस्तेषु सारा विवेकिनः । तेष्वनुष्ठानकर्तारस्तेषु शंभुपदानुगाः ॥ इति काव्यविलासे । तृणाल्लघुतरस्तूलस्तूलादपि च याचकः । वायुना किं न नीतोऽसौ मामयं प्रार्थयेदिति ॥ गिरिर्महान्गिरेरब्धिर्महानब्धेर्नभो महत् । नभसोऽपि महद्ब्रह्म ततोऽप्याशा महीयसी इति कुवलयानंदे । शरणं किं प्रपन्नानि विषवन्मारयंति वा । न त्यज्यंते न भुज्यंते कृपणेन धनानि यत् ॥ शरणमिति । कृपणेन धनानि यन्न त्यज्यंते तत्किं तानि शरणं प्रपन्नानि यच्च न भुज्यंते तत्किं विषवन्मारयंतीति क्रमेणान्वयः । अंतर्विष्णोस्त्रिलोकी निवसति फणिनामीश्वरे सोऽपि शेते सिंधोः सोऽप्येकदेशे तमपि चुलकयां कुंभयोनिश्चकार । धत्ते खद्योतलीलामयमपि नभसि श्रीनृसिंहक्षितींद्र त्वत्कीर्तेः कर्णनीलोत्पलमिदमपि च प्रेक्षणीयं विभाति ॥ अंतरिति विष्णोरंतरुदरे त्रयाणां लोकानां समाहारस्त्रिलोकी सोऽपि विष्णुरपि फणिनां नागानामीश्वरे शेषे शेते निद्राति सोऽपि शेषोऽपि सिंधोरेकदेशे तिष्ठतीति शेषः । तमपि सिंधुमपि कुंभयोनिरगस्त्यश्चुलकयांचकार पीतवान् । अयमगस्त्योऽपि नभसि गगने खद्योतशोभां धत्ते इदं गगनमपि प्रेक्षणीयं सुंदरं त्वत्कीर्तेः कर्णभूषणं नीलोत्पलं विभातीत्यन्वयः । इति सारालंकारः ।

यथासंख्यं स्पष्टम्। उदाहरणम्। हे राजन् त्वं शत्रुं जय पराभव। जि अभिभव इति धातोर्लोट्। मित्रं च रंजय प्रीणय। विपत्तिं लोकानां कष्टं च भंजय। न चायं शब्दालंकारः। अन्वयकालेऽपि क्रमस्य विवक्षितत्वात् ॥१०८॥ पर्याय इति॥

शत्रुं मित्रं विपत्तिं च जय रंजय भंजय ॥ १०८॥
पर्यायो यदि पर्यायेणैकस्यानेकसंश्रयः॥
पद्मं मुक्त्वा गता चंद्रं कामिनीवदनप्रभा ॥ १०९॥

यद्येकस्य वर्णनीयवस्तुनः पर्यायेणानुक्रमेण अनेकसंश्रयः अनेकपदार्थाश्रयणं निबध्यते तर्हि पर्यायः परिपूर्वादयतेर्भावे घञ्। उदाहरणम्। कामिनीवदनप्रभा कांतास्यकांतिः पद्मं पंकजं मुक्त्वा चंद्रं ग्लावं गता रात्राविति शेषः। नि-

१ नन्वाश्रयस्थितिरियं तव कालकूट केनोत्तरोत्तरविशिष्टपदोपदिष्टा। प्रागर्णवस्य हृदये वृषलक्ष्मणोऽथ कंठेऽधुना वससि वाचि पुनः खलानाम् ॥ नन्वाश्रयेति। हे कालकूट उत्तरोत्तरविशिष्टमुत्कृष्टं पदं स्थानं यस्यां तादृशीयमाश्रयस्थितिस्तव केनोपदिष्टेत्यन्वयः।

दर्शनासंकीर्णमेतत् ॥१०९॥ एकस्मिन्निति ॥ यदि वा एकस्मिन्पदार्थे अनेकं वस्तु वर्ण्यते सोऽपि पर्यायः संमतः। उदा०। यत्र यस्मिन् प्रदेशे पुरा स्रोतः अजनि जायतेस्म। दीपजनेत्यादिना कर्तरि च्लेश्चिण्। अधुना संप्रति तत्र पुलिनं वर्तते। अत्रैकस्मिन्सरित्प्रांते वर्षासु प्रवाहो ग्रीष्मे च पुलिनत्वमित्यनेक-

एकस्मिन्यद्यनेकं वा पर्यायः सोऽपि संमतः ॥
अधुना पुलिनं तत्र यत्र स्रोतः पुराऽजनि ॥ ११० ॥

वर्णनम्। स्रोतोंऽबुसरणं स्वत इति। तोयोज्झितं तत्पुलिनमित्यमरः। नन्वनेक-शब्दस्यैकवचनमयुक्तं द्विबहुवाचित्वादिति चेन्न। अभिधीयमानसमुदायस्यैकवचनबाधाभावात्। यथा माघे। सेव्यतेऽनेकयासन्नतापांगयेति। भवंत्यनेके जल-धेरिवोर्मय इत्यत्र त्ववयवपरत्वात्समुदायबाहुल्याद्बहुत्वं युक्तमेवेति दिक् ११०

परिवृत्तिरिति ॥ न्यूनाभ्यधिकयोः द्वन्द्वयोः मिथः। परस्परम्। मिथोऽन्यान्यं रहस्यपीत्यमरः। विनिमयो व्यत्ययः परिवृत्तिः परिवर्त्तनं व्यत्ययकरणं परिवृत्तिरिति व्युत्पत्तेः। उदा०। स राजा एकं एकत्वसंख्याविशिष्टं संख्यागुणवा-

परिवृत्तिर्विनिमयो न्यूनाभ्यधिकयोर्मिथः ॥
जेग्राहैकं शरं मुक्त्वा कटाक्षात्स रिपुश्रियः ॥ १११ ॥

चिना एकशब्देन तद्विशिष्टद्रव्ये लक्षणा। एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा। साधारणे समानेऽल्पे संख्यायां च प्रयुज्यते इति मेदिनी। शरं रोपं मुक्त्वा रिपुं प्रति क्षिप्त्वा दत्वा चेति श्लिष्टं रूपकम्। रिपुश्रियः। अरिलक्ष्म्याः गज-

१ तस्य च प्रवयसो जटायुषः स्वर्गिणः किमिव शोच्यतेऽधुना। येन जर्जरकलेवरव्ययात्क्रीतमिंदुकिरणोज्ज्वलं यशः ॥ तस्य चेति। प्रवयसोऽतिवृद्धस्य जटायुषो गृध्रविशेषस्य स्वर्गं गतवतः किमिव शोचनीयं न किंचिदित्यर्थः। जर्जरं जीर्णं कलेवरं शरीरं तस्य व्ययो रावणेन सह युद्धे त्यागस्तस्माद्यशः क्रीतम्। शरीरं दत्वा यशो गृहीतमित्यर्थः ॥

तुरगादिसंपत्तिरूपायाः पद्मायाश्चेति श्लिष्टरूपकम्। शोभासंपत्तिपद्मासु लक्ष्मीः श्रीरिव दृश्यते इति केशवः। कटाक्षान् तदीयवस्तुलाभानित्यर्थः। कृपासूचकत्वसादृश्येन तेषु कटाक्षत्वारोपात् बहूनित्यर्थः। बहुषु बहुवचनमिति सूत्राद्बहुशब्दाभावेऽपि कटाक्षाणां बहुत्वं एकशब्दप्रयोगादेकवचनाच्च शरस्यैकत्वमिति न्यूनाधिकभावः। जग्राह स्वीचकार उपाददे चेति श्लिष्टरूपकम्। ततश्च राज्ञः

परिसंख्या निषिध्यैकमेकस्मिन्वस्तु यंत्रणम् ॥
स्नेहक्षयः प्रदीपेषु न स्वांतेषु नतभ्रुवाम् ॥ ११२ ॥

शूरत्वं रिपूणां च पलायनं गम्यते ॥१११॥ परिसंख्येति ॥ एकस्मिन्प्रकृते एकं किंचिद्वस्तु निषिध्य यंत्रणं तस्यान्यत्र नियमनं परिसंख्या। परित्यज्य संख्यानं नियमनं परिसंख्येति व्युत्पत्तेः। उदाहरणम्। स्नेहक्षयः तैलक्षयः प्रीतिक्षयश्चेति श्लिष्टरूपकं प्रदीपेष्वेव भवति। नतभ्रुवां कामिनीनां स्वांतेषु चित्तेषु तु न भ[illegible]गति।

वदनाथस्तु सकर्मक इति प्रपंचितं रसविदो ॥ ९३ ॥ अधिकमि[illegible] । पृथुला-
धारात् विशालाधिकरणात् आधेयस्य वस्तुनः आधिक्यवर्णनमधिकत्वोक्तिर-
धिकम्। उदाहरणम्। यत्र जले ब्रह्मांडानि मांति तत्र तस्मिंस्ते तव गुणाः न मांती-
ति गुणानामाधिक्यवर्णनादधिकम् । अत्र गुणशब्देन तद्गणनार्थो वर्णविन्यासो

अधिकं पृथुलाधारादाधेयाधिक्यवर्णनम् ॥
ब्रह्मांडानि जले यत्र तत्र मांति न ते गुणाः ॥ ९४ ॥
पृथ्वाधेयाद्यदाधाराधिक्यं तदपि तन्मतम् ॥

लक्ष्यते॥९४॥पृथ्विति॥ पृथ्वाधेयाद्विशालादाधेयात् यत् आधाराधिक्यं तदपि
तदधिकं मतम्। उदाहरणम्। वाग्ब्रह्म शब्दब्रह्म कियत् किं परिमाणमस्येति कि-
यत् । किमिदंभ्यां वो घ इति वतोर्वस्य घस्तस्य यादेशः । यत्रैते तव गुणाः विश्रा-

१ युगांतकालप्रतिसंहृतात्मनो जगंति यस्यां सविकाशमासत । तनौ ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसंभवा मुदः ॥

म्यति गद्यपद्यात्मके हि शब्दब्रह्मणि वर्णितानां गुणानां विश्रामो भवति। एतच्छब्देन प्रत्यक्षवाचिना असंख्यातत्वं विवक्षितमिति लक्षणानुगतिः ॥९५॥ अल्पमिति॥सूक्ष्मादाधेयात् यत् आधारस्य सूक्ष्मता वर्ण्यते तत्तु अल्पमलंकारः।

कियद्वाग्ब्रह्म यत्रैते विश्राम्यंति गुणास्तव ॥ ९५ ॥
अल्पं तु सूक्ष्मादाधेयाद्यदाधारस्य सूक्ष्मता ॥
मणिमालोर्मिका[2] तेऽद्य जपमालायते करे ॥ ९६ ॥

तु शब्दः पूर्वालंकारवैलक्षण्यद्योतकः। उदाहरणम्। अद्य ते तव करे मणिमालोर्मिका मणिपंक्तिखचितमुद्रिका जपमालायते। अतिविशाला भवतीत्यर्थः।तेन अं-

१• अहो विशालं भूपाल भुवनत्रितयोदरम्। माति मातुमशक्योऽपि यशोराशिर्यदत्र ते ॥ २ यन्मध्यदेशादपि ते सूक्ष्मं लोलाक्षि दृश्यते। मृणालसूत्रमपि ते नैव माति स्तनांतरे ॥ यदिति। हे चंचलाक्षि तव मध्यभागादपि यत्सूक्ष्मं दृश्यते तन्मृणालसूत्रमपि तव स्तनयोरंतरे मध्ये न मातीत्यन्वयः।

गुल्याः करस्य वा सूक्ष्मता गम्यते॥९६॥अन्योन्यमिति ॥ यत्र परस्परं क्रियाविशेषणमेतत्। उपकारः सत्कारः उपयोगो वा स्यात् तत्र अन्योन्यं नामालंकारः। उदाहरणम्। त्रियामा रात्रिः। प्रथमयामस्य धर्मशास्त्रे दिवसतुल्यत्वाभिधानात् त्रियामत्वम्। अथवा द्विमुहूर्ता सायंसंध्या द्विमुहूर्ता च प्रातः संध्या

अन्योन्यं नाम यत्र स्यादुपकारः परस्परम् ॥
त्रियामा शशिना भाति शशी भाति त्रियामया ॥ ९७ ॥

तदवशिष्टा च रात्रिरिति त्रियामत्वम्। शशिना चंद्रेण भाति शशी च त्रियामया भाति इत्यन्योन्यसत्कारपक्षे। उपयोगपक्षे तु। अन्योन्यतः पथि बताबिभ्तामिभोष्ट्रावित्युदाहरणम्। अन्योन्यस्मान्मेषावुपसरत इत्यत्र तु नालंकारः।

१ विनयैर्भाति विद्येयं विनयो भाति विद्यया। धनैराभांति दानानि दानैर्भांति धनान्यापि ॥

चमत्काराभावात् ॥ ९७ ॥ विशेष इति ॥ ख्यातं प्रसिद्धं आधारं विनापि आधेयवर्णनं विशेषः स्पष्टम् । उदाहरणम् । सूर्ये गतेऽपि अस्तमिते दीपस्थास्तत्करास्तत्किरणाः । सूर्यतेजः सायमग्नौ प्रविशतीत्यागमः । तमो ध्वांतं छिंदंति

विशेषः ख्यातमाधारं विनाप्याधेयवर्णनम् ॥
गतेऽपि सूर्ये दीपस्थास्तमश्छिंदंति तत्कराः ॥ ९८ ॥
विशेषः सोऽपि यद्येकं वस्त्वनेकत्र वर्ण्यते ॥

नाशयंति । अत्र सूर्यकिरणानामाधारः सूर्य एव प्रसिद्धः । सूर्ये दूरं गतेऽपि तस्यैव करास्तमश्छिंदंति इत्यप्रसिद्धकथनं विशेषः ॥ ९८ ॥ विशेष इति ॥ यदि एकं वस्तु अनेकत्र स्थितं वर्ण्यते तर्हि सोऽपि विशेषः । उदाहरणम् । अं-

१ दिवमप्युपयातानामाकल्पमनल्पगुणा येषाम् । रमयंति जगंति गिरः कथमिव कवयो न ते वंद्याः ॥ दिवमिति । दिवमुपयातानामपि येषामनल्पगुणगणयुक्ता गिर आकल्पं कल्पपर्यंतं जगंति भुवनानि रमयंतीत्यन्वयः ।

सर्वदिक्ष्वपि सैव प्रेयसी भासते । इत्येकस्याः कामिन्याः युगपदनेकदेशवर्ति-

[1]अंतर्बहिः पुरः पश्चात्सर्वदिक्ष्वपि सैव मे ॥ ९९ ॥
किंचिदारंभतोऽशक्यवस्त्वंतरकृतिश्च सः ॥
[2]त्वां पश्यता मया लब्धं कल्पद्रुमनिरीक्षणम् ॥ १०० ॥

त्वकथनं विशेषः ॥ ९९ ॥ किंचिदिति ॥ किंचिदारंभतः कस्यचिदारंभः किंचिदारंभः । मयूरव्यंसकादित्वात्समासः । ततः पंचम्यास्तसिल् । अशक्यवस्त्वं-

---

[1] हृदयान्नापयातोऽसि दिक्षु सर्वासु दृश्यसे । वत्स राम गतोऽसीति संतापेनानुमयिसे ॥ [2] स्फुरदद्भुतरूपमुत्प्रतापज्वलनं त्वां सृजतानवद्यविद्यम् । विधिना ससृजे नवो मनोभूर्भुवि सत्यं सविता बृहस्पतिश्च ॥ स्फुरदिति । उत्कटः प्रतापरूपो ज्वलनोऽग्निर्यस्येत्यर्थः । उक्तविशेषणं त्वां सृजता विधिना भुवि नवो मनोभवादिः ससृजे सृष्ट इति सत्यमित्यन्वयः ।

तरकृतिः अशक्यस्य वस्त्वंतरस्यान्यवस्तुनः कृतिः करणं च सः । उदाहरणम् । हे राजन् त्वां पश्यता मया कल्पद्रुमनिरीक्षणं देववृक्षावलोकनं लब्धम् । अत्र त्वमेव कल्पवृक्ष इति रूपकालंकारो व्यज्यते । तन्मूला च पृथिव्यां कर्तुमशक्यकल्पद्रुमावलोकनस्य कृतिरिति विशेषः ॥१००॥ स्यादिति ॥ चेद्यदि त-

स्याद्व्याघातोऽन्यथाकारि तथाकारि क्रियेत चेत् ॥
यैर्जगत्प्रीयते हंति तैरेव कुसुमायुधः ॥ १०१ ॥

थाकारि प्रसिद्धार्थकर्तृ वस्तु अन्यथाकारि तद्विपरितकारि क्रियेत निबध्येतेति यावत्तर्हि व्याघातो नामालंकारः स्यात् । यैः पुष्पैः जगत्प्रीयते तुष्यति । प्रीणातेः कर्मकर्तरि लट् । तैरेव पुष्पैः कुसुमायुधः कामो हंति ताडयति । अत्र प्रीतिकरत्वेन प्रसिद्धानां कुसुमानां ताडनकरणत्वमन्यथाकारित्वं तानि कुसुमानि चो-

१ दृशा दग्धं मनसिजं जीवयंति दृशैव याः । विरूपाक्षस्य जयनीस्ताः स्तुवे वामलोचनाः ॥

क्राणि। नर्मदामाहात्म्ये। अशोकमरविंदं च चूतं च नवमल्लिका। शिरीषकुसुमं चे- ते पंचबाणस्य सायकाः॥ वस्तुतस्तु शब्दादयः पंच विषया एव बाणत्वेन वर्ण्य- ते इत्याहुः॥१०१॥ सौकर्येणेति॥ यत्र सौकर्येण सुकरत्वेन सुखकरत्वेनेत्यर्थः। निबद्धा प्रारब्धा क्रिया कार्यविरोधिनी सुकरत्वविरोधिनी दुःखकारिणी भ-

सौकर्येण निबद्धापि क्रिया कार्यविरोधिनी॥
दया चेद्बाल इति मय्यपरित्याज्य एव ते॥ १०२॥

वति। अत्रापि व्याघातः। उदाहरणम्। हेराजन्मयि बाल इति मत्वा दया चेत् अस्ति। तर्हि रणे जिगमिषुणा ते तवाहमपरित्याज्य एव गेहे न स्थापनीय एव। किं तु युद्धे सहैव नेतव्य इत्यर्थः। अत्र राज्ञा सुकरत्वेन प्रारब्धं गेहे रक्षणं शूरस्य कुमारस्य दुःखतरं जातमिति कार्यविरोधित्वम्॥ १०२॥

१ लुब्धो न विसृजत्यर्थं नरो दारिद्र्यशंकया। दातापि विसृजत्यर्थं तयैव ननु शंकया॥

गुंफ इति ॥ यथा प्रक्रांतकारणैः प्रक्रांतानि प्रथमोच्चरितान्यनतिक्रम्य इति यथाप्रक्रांतं यथाप्रक्रांतमुक्तानि कारणानि यथाप्रक्रांतकारणानि । मध्यमपदलोपी समासः । तैस्तथोक्तैर्गुंफो रचना कारणमाला स्पष्टम् स्यात् । उदाहरणम् । नयेन कारणेन श्रीः कार्यं भवति । श्रिया कारणेन त्यागः कार्यं भवति । तेन

> गुंफः कारणमाला स्याद्यथा प्रक्रांतकारणैः ॥
> नयेन श्रीः श्रिया त्यागस्त्यागेन विपुलं यशः ॥ १०३ ॥

त्यागेन च विपुलं यशो भवति । अत्र यद्यपि कार्याणामपि माला विद्यते तथापि कारणगुणवर्णनमेव कविसंरंभ इति विवक्षापूर्विका हि शब्दार्थप्रतिपत्तिरि-

१ उत्तरोत्तरकारणभूतपूर्वपूर्वैः पूर्वपूर्वकारणभूतोत्तरोत्तरैर्वा वस्तुभिः कृतो गुंफः कारणमाला । यथा वा । भवंति नरकाः पापात्पापं दारिद्र्यसंभवम् । दारिद्र्यमप्यदानेन तस्माद्दानपरो भवेत् ॥

मत्काराधिक्यात् ॥ ८५ ॥ अपारिजातामिति ॥ हे [illegible]न् वसुधां अपारि-
जातां अपगतं अरिजातं शत्रुवृंदं यस्यास्तादृशीं चिकीर्षन् कर्तुमिच्छन् द्यां दिव-
म्। सुरलोको द्योदिवौ द्वे स्त्रियामित्यमरः। तथा अपारिजातामकृथाः कृतवान्।
पारिजातहरणेन नास्ति पारिजातो यस्यां सा तथोक्तामिति श्लिष्टरूपकं द्विती-

अन्यत्कर्तुं प्रवृत्तस्य तद्विरुद्धकृतिस्तथा ॥ ८५ ॥
अपारिजातां वसुधां चिकीर्षन् द्यां तथाऽकृथाः ॥

यम्। उदाहरणम्। गोत्रोद्धारप्रवृत्तः गोत्रायाः पृथिव्याः उद्धारे समुद्रादुद्धृत्य
स्थापने वराहरूपेण प्रवृत्तस्त्वं गोत्रोद्भेदं पर्वतोद्भेदं क्षित्युद्भेदं चेति श्लिष्टरूपकम्।
पुरा पूर्वमकरोः यद्वा कृष्णावतारे गोत्रोद्धारप्रवृत्तः भुवो भारहरणेन स्थापने

१ अत्र कृष्णं प्रति शक्रस्य सोपालंभवचने भुवि शिकीर्षिततया तत्र करणीयं अपारिजातत्वं दिवि कृतमित्येकासं-
गतिः। पुरा गोत्राया उद्धारे प्रवृत्तेन वराहरूपिणा तद्विरुद्धं गोत्राणां दलनं खुरकुट्टनैः कृतमिति द्विविधापि श्लेषेणस्थापिता।

प्रवृत्तोऽपि गोत्रोद्भेदं गोवर्धनोद्भेदमिति। अथवा गोत्रस्य यदुकुलस्य उद्धारे विप्रशापनिवर्तनेन संकटादुद्धरणे प्रवृत्तस्त्वं गोत्रोद्भेदं कुलोच्छेदमिति विरुद्धकृतिः

गोत्रोद्धारप्रवृत्तो हि गोत्रोद्भेदं पुराकरोः ॥ ८६ ॥
विषमं वर्ण्यते यत्र घटना ननु रूपयोः ॥

॥ ८६ ॥ विषममिति ॥ यत्र द्वयोरर्थयोरननुरूपयोः सतोरसदृशत्वेन विवक्षितयोरित्यर्थः । घटना अनुरूपत्वनिषेधरूपा वर्ण्यते वैलक्षण्यवाचकशब्द-

त्वत्खड्गखंडितसपत्नविलासिनीनां भूषा भवंत्यभिनवा भुवनैकवीर । नेत्रेषु कंकणमथोरुषु पत्रवल्ली चोलेंद्रसिंह तिलकं करपल्लवेषु ॥ हेभुवनैकवीर चोलदेशाधिप सिंहसदृश तव खड्गेन खंडिता ये सपत्नाः शत्रवस्तद्विलासिनीनामभिनवा अदृष्टपूर्वा भूषा भूषणानि भवंति। यथा नेत्रेषु कं कणं जलकणमेव कंकणं वलयं भवतीत्यनुषंगः। अथेति समुच्चये। उरुषु च पत्रयुक्ता वल्ली सैव पत्रिकारचना करपल्लवेषु तिलयुक्तं कं जलमेव ललाटभूषणमिति श्लोकार्थः । मोहं जगत्त्रयभुवामुपनेतुमेतदादाय रूपमखिलेश्वरदेहभाजाम् । निःसीमकांतिरसनीरधिनामुनैव मोहं प्रवर्धयसि मुग्धविलासिनीनाम् ॥ मोमिति । हेअखिलेश्वर जगत्त्रयवर्तिनां देहधारिणां मोहमपनेतुमेतद्रूपं कृष्णशरीरमादाय मर्यादातिक्रांतं कांतिरूपरससमुद्रेणामुनैव रूपेण सुंदरस्त्रीणां मोहं प्रवर्धयसीत्यन्वयः ।

प्र... ...गक्व्युत्पत्तेः। उदाहर-
णम्। शिरीषमृद्व॥ ... ...रियं क्व। स इव दृश्यते इति तादृक
अनिर्वचनीयः। यद्वा ... इवेति तादृक् तादृगादौ सूत्रमते कर्मकर्तरि कृत्स्मृतः।
महाभाष्ये त्विवेत्यर्थे दृग्दृशौ तद्धितौ मताविति वामनः। मदनज्वरः मदन-

क्वेयं शिरीषमृद्वंगी क्व तादृङ्मदनज्वरः ॥ ८७ ॥
विरुद्धकार्यस्योत्पत्तिरपरं विषमं मतम् ॥

कृतो ज्वरः संतापो मदनज्वर इति मध्यमपदलोपी समासः। क्व। नोभयं सम-
त्वेन घटत इत्यर्थः। प्रायेणायं क्व शब्दद्वये सत्येव भवति ॥८७॥ विरुद्धेति ॥
विरुद्धकार्यस्य कारणविरोधित्वेन प्रसिद्धस्य कार्यस्य उत्पत्तिर्वर्णनमपरं विषमं

१ अभिलषसि यदींदो वक्त्रलक्ष्मीं मृगाक्ष्याः पुनरपि सकृदब्धौ मज्ज संक्षालयांकम्। सुविमलमथ बिंबं पारिजात-
प्रसूनैः सुरभय वद नोचेत्त्वं क्व तस्या मुखं क्व ॥

मतम्। विरूपकार्यस्येति पाठेऽप्ययमेवार्थः। विरुद्धं रूपं यस्य तत्। उदाहरणम्। तव श्यामा कृपाणिका तरवारिः धवलां शुभ्रां कीर्तिं प्रसूते। अत्रासितायाः कृपाणिकायाः सितत्वेन विरुद्धायाः कीर्तेरुत्पत्तिरुक्तेति लक्षणानुगमः। न चास्य कारणस्यापि विरुद्धत्वाद्विभावनायामंतर्भावः। यत्र कारणस्य प्रकृतविरुद्धत्वविवक्षा तत्र विभावना। यत्र च कार्यस्य तथात्वविवक्षा तत्र विषमम्।

कीर्तिं प्रसूते धवलां श्यामा तव कृपाणिका ॥ ८८ ॥

अनिष्टस्याप्यवाप्तिश्च तदिष्टार्थसमुद्यमात् ॥

यत्र चोभयोस्तत्र संकर इति सिद्धांतात्। वस्तुतस्तु नाश्यनाशकभावरूपं विरुद्धत्वं विभावनायां [illegible]कारभेदरूपं विरुद्धत्वं विषमालंकारे इति भेदः। एवं च विरूपकार्यस्येति ण[illegible]प्रकारं रूपं यस्येति विरूपं तादृशं [illegible] [illegible]यमात् इष्टायेति इ-

ष्टार्थः स चासौ समुद्यमस्तस्मात् अ।नष्टस्य।प्यवाप्तिः अपिशब्दादिष्टानवाप्तिश्च तद्विषमम्। उदाहरणम्। आखुर्मूषकः भक्ष्याशया मोदकादितृष्णया अहिमंजूषां सर्पपेटिकां दष्ट्वा विलोक्य प्रविष्ट इति शेषः । दष्ट्वेति पाठे विदार्येत्यर्थः । केचित्तु द्रष्टेति तृन्प्रत्ययांतं तद्योगे मंजूषाशब्दस्य न लोकेत्यादिना षष्ठीप्रतिषेधः ।

भक्ष्याशयाहिमंजूषां दष्ट्वाखुस्तेन भक्षितः ॥ ८९ ॥
समं स्याद्वर्णनं यत्र द्वयोरप्यनुरूपयोः ॥

तादृशः स तेनाहिना भक्षितः । अत्र भक्ष्यलाभो न जातः स्वयं चाहिना भक्षित इति इष्टानवाप्तिपूर्विकाऽनिष्टावाप्तिः । प्रकारांतरमपि कुवलयानंदे द्रष्टव्यम् ॥ ८९ ॥ सममिति ॥ यत्रानुरूपयोः सदृशयोर्योग्ययोर्वा द्वयोरर्थयोर्वर्णनं तत्रापि सम-

१ दिधक्षन्मरुतः पुत्रं तमादीप्य दशाननः । आत्मीयस्य पुरस्यैव सद्यो दहनमन्वभूत् ॥' लोके कलंकमपहातुमयं मृगांको जातो मुखं तव पुनस्तिलकच्छलेन । तत्रापि कल्पयसि तन्वि कलंकरेखां नार्यः समाश्रितजनं हि कलंकयंति ॥

मलंकारः स्यात्। सह तुल्यतया मीयते इति सममिति व्युत्पत्तेः। मांसैरपि शक्यं क्षुदपनेतुमिति भाष्यप्रयोगात्सामान्ये नपुंसकत्वम्। उदाहरणम्। हारेण गुच्छादिना कुचमंडलं स्वानुरूपं स्वसदृशं स्वयोग्यं वा सद्म स्थानं कृतम्। अ-

स्वानुरूपं कृतं सद्म हारेण कुचमंडलम् ॥ ९० ॥
सारूप्यमपि कार्यस्य कारणेन समं विदुः ॥
नीचप्रवणता लक्ष्मि जलजायास्तवोचिता ॥ ९१ ॥

त्रोभयोर्वर्तुलत्वरुचिरत्वाभ्यामनुरूपत्वम् ॥९०॥ सारूप्यमिति ॥ कार्यस्य कारणेन सह सारूप्यं समानं रूपं ययोस्ते सरूपे तयोर्भावः सारूप्यं तुल्यरूपत्वमपि समं विदुः। उदाहरणम्। हे लक्ष्मि जलजायाः सागरोदितत्वाज्जलजाया-

१ कौमुदीव तुहिनांशुमंडलं जाह्नवीव शशिखंडमंडनम्। पश्य कीर्तिरनुरूपमाश्रिता वां विभाति नरसिंह भूपते ॥
२ दवदहनादुत्पन्नो धूमो घनतामुपेत्य वर्षैस्तम्। यच्छमयति तद्युक्तं सोऽपि दवमेव विनिहंति ॥

स्तवनीच[illegible]

पण संभक्ताविति धातोः पचाद्यच् । तस्या भावो नीचप्रवणता उचिता योग्या । उच समवाय इति धातोः कर्मणि क्तः॥९१॥ विनेति ॥ यमर्थं कर्तुमुद्यमः क्रियते । अनिष्टमंतरायं विनापि तत्सिद्धिश्च समम् । उदाहरणम् । वारणार्थिनो गजा-

विनानिष्टं च तत्सिद्धिर्यमर्थं कर्तुमुद्यमः ॥
युक्तो वारणलाभोऽयं शालते वारणार्थिनः ॥ ९२ ॥

र्थिनो निषेधार्थिनश्चेति श्लिष्टरूपकम् । युक्तः उदितोऽयं वारणलाभः प्रतिबंध-प्राप्तिर्गजप्राप्तिश्चेति श्लिष्टरूपकम् । शालते शोभते । न चात्र प्रतिबंधलाभस्या-निष्टत्वं शंक्यम् । लोकदृष्ट्या अनिष्टत्वेऽपि श्लेषभित्तिकाभेदाध्यवसायेन तन्ना-

---

१ उच्चैर्गजैरटनमर्थयमान एव त्वामाश्रयन्निह चिरादुषितोऽस्मि राजन् । उच्चाटनं त्वमपि लंभयसे तदेव मामद्य नैव विफला महतां हि सेवा ॥

स्तीति । यद्वा । अर्थद्वयमनाश्रित्य समालंकारप्रवृत्तौ पुनः श्लेषालंकारप्रवृत्त्या चमत्कारातिशय इति बाधो नास्तीति । एवमन्यत्रापि बोध्यम् । लक्षणे यदर्थं कर्तुमुद्यम इति केषांचित्पाठः स्पष्टार्थः ॥९२॥ विचित्रमिति ॥ चेद्यदि विपरीतफलेच्छया प्रयत्नः स्यात्तर्हि विचित्रं स्पष्टम् । उदाहरणम् । संतः साधवः त्रैलो-

विचित्रं तत्प्रयत्नश्चेद्विपरीतफलेच्छया ॥
नमंति संतस्त्रैलोक्यादपि लब्धुं समुन्नतिम् ॥ ९३ ॥

क्यादपि । त्रयो लोका एव त्रैलोक्यमित्यत्र चातुर्वर्ण्यादित्वात् ष्यञ् । पंचमी विभक्ते इति पंचमी । समुन्नतिं उत्कर्षं उच्चत्वं चेति श्लिष्टरूपकम् । लब्धुं नमंति प्रह्वीभवंति । अनुद्धतस्वभावा भवंति चेति श्लिष्टरूपकम् । अत्र नमतिरकर्मकः

१ मलिन[illegible] विमलयति जगंति देव कीर्तिस्ते । मित्राह्लादं कर्तुं मित्रास्तं हरति प्रतापोऽपि ॥

दान [illegible] पुष्परूपैः कोमलैरस्त्रैः जगदिदं जयत्य-
भिभवति । जि अभिभवे इति धातोर्लट् । जि जये त्वकर्मकः । अत्र अस्त्रा-
णामनेकविधत्वाभावादपुष्कलत्वं तथाविधानामपि विधातृवरेण जगज्जयसाध-
नत्वमिति विधातृवरोर्जितस्य कामस्य प्रसिद्धास्त्रनिरपेक्षत्वेन सामग्र्यसंपा-

अस्त्रैरतीक्ष्णकठिनैर्जगज्जयति मन्मथः ॥ ७७ ॥
कार्योत्पत्तिस्तृतीया सा[2] सत्यपि प्रतिबंधके ॥

दकत्वाभिधानाच्चमत्कारः । अत्रापि विरोधोक्तौ तात्पर्यं नास्ति ॥ ७७ ॥ का-
र्येति ॥ प्रतिबंधके बाधकारणे सत्यपि कार्योत्पत्तिः तृतीया पूर्वोक्तप्रकारद्वय-
भिन्ना सा ज्ञेया । कार्योत्पत्तौ प्रतिबंधकाभावस्यापि कारणत्वेनांगीकारात् । उ-

१ अत्र जगज्जये साध्ये हेतूनामस्त्राणामसमग्रत्वतीक्ष्णत्वादिगुणवैकल्यम् । यथा वा—उद्यानमारुतोद्धूतांश्चूतचंपकरेणवः । उदस्त्रयंति पांथानामस्पृशंतोऽपि लोचने ॥ लोचने कर्मभूते उदस्त्रयंति उद्गताश्रूणि कुर्वंतीत्यर्थः । अत्र बाष्पोद्गमनहेतूनामसमग्रत्वं स्पर्शनक्रियावैकल्यम् । २ स्यादित्यपि पाठः ।

दाहरणम् । हे राजन् ते तव असिः खड्गः स एव भुजंगमः सर्पः नरेंद्रानेव नृपान् विषवैद्यांश्चेति श्लिष्टरूपकम् । नरेंद्रो वार्तिके राज्ञि विषवैद्येऽपि वाच्यवदिति विश्वः । दशति लक्षणया हंतीत्यर्थः । अत्र विषवैद्यत्वं दशनक्रियायाः प्रतिबंधकत्वेऽपि सर्पस्य प्रबलत्वाभिव्यक्त्या चमत्कारः ॥ ७८ ॥

नरेंद्रानेव ते राजन् दशत्यसिभुजंगमः ॥ ७८ ॥

अकारणात्कार्यजन्म चतुर्थी स्याद्विभावना ॥

अकारणादिति ॥ अकारणात् कारणसदृशात् वस्तुनः कार्यजन्म चतुर्थी प्रागुक्तभिन्नप्रकारा विभावना स्यात् । उदाहरणम् । शंखात् शंखत्वेनाध्यस्तात्कामिनीकंठादिति रूपकातिशयोक्तिः । अयं वीणानिनादः मधुरालाप एव । वी-

१ चित्रं तपति राजेंद्र प्रतापतपनस्तव ॥ अनातपत्रमुत्सृज्य सातपत्रं द्विषद्गणम् ॥ चित्रमिति । प्रताप एव तपनः सूर्यः आत[illegible]

णानिनादे इत्यत्रापि रूपकातिशयो[illegible]ति महदद्भुतमस्ति । घोरध्वनिका-
रणस्य शंखस्य मधुरालापकारणत्वमित्याश्चर्यम् । तत्रापि परकीयकार्यकारित्व-
मिति महत्त्वं वीणाशंखयोः शब्दकारणत्वेन सादृश्यं नञर्थः । यथाहुः शाब्दिकाः ।

शंखाद्वीणानिनादोऽयमुदेति महदद्भुतम् ॥ ७९ ॥

विरुद्धात्कार्यसंपत्तिर्दृष्टा काचिद्विभावना ॥

तत्सादृश्यं तदन्यत्वं तदल्पत्वं विरोधिता । अप्राशस्त्यमभावश्च नञर्थाः षट् प्रकीर्तिताः ॥ ७९ ॥ विरुद्धादिति ॥ विरुद्धात् प्रसिद्धकारणविरुद्धादित्यर्थः ।

---

१ उदिते कुमारसूर्ये कुवलयमुल्लसति भाति नक्षत्रम् । मुकुलीभवंति चित्रं परराजकुमारपाणिपद्मानि ॥ उदित इति कस्यचिद्राजकुमारस्य प्रतापवर्णनं कुमाररूपे सूर्ये उदिते सति कोः पृथिव्या वलयं मंडलमेव कुवलयं कुमुदमुल्लासं प्राप्नोति । क्षत्रं क्षत्रियकुलं न भाति अथ च नक्षत्रं भातीति चित्रम् । तथा परेषां राजकुमाराणां पाणिकमलानि मुकुलीभवंति संकुचंति । अंजलिबंधात्तदाकृतीनि भवंतीत्यर्थः । तिलपुष्पात्समायाति वायुश्चंदनसौरभः । इंदीवरयुगाच्चित्रं निःसंरति शिलीमुखाः ॥

कार्यसंपत्तिः कार्योत्पत्तिः काचिद्विभावना दृष्टा । उदाहरणम् । हंतेति खेदे शीतांशुकिरणाः उष्मांशुविरुद्धा इति गम्यते । तां प्रोषितभर्तृकां तन्वीं कामिनीं संतापायंति । अत्र केषुचिच्छ्लोकेषु पादपूरणार्थं प्रयुक्तान्यधिकान्यपि पदानि संति । न तत्र दोषः शंक्यः प्रकृतं संगतत्वात् । एवं चैववाहीत्यादीनामसंगतानामेवाधिकत्वे दोषस्वीकारात् । एवं क्वचिन्न्यूनपदत्वमपि न दोषः आकांक्षितपदाध्याहारस्य सकलशास्त्रसंमतत्वाच्छीघ्रप्रतीताध्याहारे तु दोषः ॥ ८० ॥

शीतांशुकिरणास्तन्वीं हंत संतापयंति ताम् ॥ ८० ॥

कार्यात्कारणजन्मापि दृष्टा काचिद्विभावना ॥

कार्यादिति ॥ कार्यात् कार्यत्वेन प्रसिद्धात् वस्तुनः कारणजन्म कारणत्वेन प्र-

१ अविवेकि कुचद्वंद्वं हंतु नाम जगत्त्रयम् । श्रुतिप्रणयिनोरक्ष्णोरयुक्तं जनमारणम् ॥ पूर्वोदाहरणयोः कारणस्य कार्यविरोधित्वं स्वाभाविकम् । इह तु श्रुतिप्रणयि[illegible] [illegible]ति भेदः ।

...हरण-

म्। हे नृप तव करकल्पतरोः यशः पयोराशिरभूत्। अत्र पयोराशिः कारणं कल्पतरुश्च कार्यमिति प्रसिद्धिः। तद्विपरीतवर्णनात् रूपकसंकीर्णा विभावना।

यशः पयोराशिरभूत्करकल्पतरोस्तव ॥ ८१ ॥

कार्याजनिर्विशेषोक्तिः सति पुष्कलकारणे ॥

हार्दि[2] स्नेहक्षयो नाभूत्स्मरदीपे ज्वलत्यपि ॥ ८२ ॥

संकीर्णत्वे दोषो नास्तीत्यग्रे वक्ष्यामः ॥ ८१ ॥ कार्येति ॥ पुष्कलकारणे पूर्णाः कला यस्येति पुष्कलमन्यूनांशम्। पृषोदरादित्वात्साधुः। तथाविधे कारणे स-

---

१ जाता लता हि शैले जातु लतायां न जायते शैलः। संप्रति तद्विपरीतं कनकलतायां गिरिद्वयं जातम् ॥ २ अनुरागवती संध्या दिवसस्तत्पुरःसरः। अहो दैवगतिश्चित्रा तथापि न समागमः ॥ पूर्वोदाहरणेऽनुक्तनिमित्ता इह दैवगतिवैचित्र्यस्य निमित्तस्योपादानादुक्तनिमित्तेति भेदः।

त्यपि कार्याजनिः कार्यानुत्पत्तेरुक्तिविशेषोक्तिः विशेषस्य नवीनप्रकारस्योक्तिरिति व्युत्पत्तेः । उदाहरणम् । स्मरदीपे अनंगदीपके हृदि हृदये । पद्दन्नेत्यादिना हृद-यस्य हृदादेशः । यद्वा हृदि मनसि । स्वांतं हृन्मानसं मन इत्यमरः । ज्वलति दी-प्यमाने सत्यपि स्नेहक्षयः स्नेहः प्रीतिस्तैलं चेति श्लिष्टरूपकम् । स्नेहस्तैलादि-करसे द्रव्ये स्याद्धृदयेऽपि चेति विश्वः । तस्य क्षयो नाशो माभून्न जातः । दीपज्व-

असंभवोऽर्थनिष्पतेरसंभाव्यत्ववर्णनम् ॥

लने सत्यपि तैलक्षयो न जात इत्यपिशब्दो विरोधद्योतकः । न चात्र विरोधा-भासः शंक्यः । कार्यकारणविषये तस्यानंगीकारात् । नापि विभावना तस्याः कार-णाभावप्रधानत्वात् । अस्यास्तु कार्याभावप्रधानत्वमिति ॥ ८२ ॥ असंभव इति ॥

अर्थनिष्पत्तेः प्रकृतार्थसिद्धेः असंभाव्यत्वस्य आश्चर्यत्वस्य वर्णनमसंभवः । उ-दाहरणम् । गोपशिशकः नंदकुमारः । स्वार्थे कः अल्पार्थे वा । शैलं गोवर्धनं उ-

य-

नार्थम् ॥ ८३ ॥ विरुद्धमिति ॥ कार्यहेत्वोः कार्यकारणयोः । लक्षणहेत्वोरिति ज्ञापकात् हेतुशब्दस्य परनिपातः । विरुद्धमप्रसिद्धं भिन्नदेशत्वं भिन्नौ देशौ ययोस्तौ भिन्नदेशौ तयोर्भावो भिन्नदेशत्वं भिन्नदेशावस्थानवर्णनमित्यर्थः । अ-

कों वेद गोपशिशुकः शैलमुत्पाटयिष्यति ॥ ८३ ॥
विरुद्धं भिन्नदेशत्वं कार्यहेत्वोरसंगतिः ॥

संगतिः । उदाहरणम् । यदा जलधरैर्मेघैर्विषं उदकं गरलं चेति श्लिष्टरूपकम् । विषं तु गरले जले इति शाश्वतः । पीतमात्मनि निहितं तदा पथिकांगनाः पांथस्त्रियो मूर्छिताः मोहं प्राप्ताः । मूर्छामोहसमुछ्राययोरिति धातोः कर्तरि क्तः ।

१ अयं वारामेको निलय इति रत्नाकर इति श्रितोऽस्माभिस्तृष्णातरलितमनोभिर्जलनिधिः । क एवं जानीते निजकरपुटीकोटरगतं क्षणादेनं ताम्यत्तिमिमकरमापास्यति मुनिः ॥